रत्नभारतीग्रन्थमालायाः षष्ठं पुष्पम्



श्रीजयादित्यवामनविरचिता

# काशिकावृत्तिः

(हरदत्तमिश्रकृत-पदमञ्जरीव्याख्यया, जिनेन्द्रबुद्धिकृत-काशिकाविवरणपञ्चिकया न्यासापराभिधया चोपेता)

## द्वितीयो भागः

संपादकः

डा० श्रीनारायणमिश्रः

प्राध्यापकः

काशीहिन्दूविश्वविद्यालयीयसंस्कृतविभागस्थः



रत्ना पब्लिकेशन्स, वाराणसी

१९८५

Ratnabharati Series—6



# KĀSIKAVṚTTI

OF

JAYĀDITYA-VĀMANA

(Along with Commentaries Vivaraṇapañcikā—Nyāsa of Jinendrabuddhi and Padamañjarī of Haradatta Miśra)

## Part II

*Edited by*

DR. SRĪNĀRĀYAṆA MISRA

Reader in Sanskrit Department, Faculty of Arts,

Banaras Hindu University.



RATNA PUBLICATIONS, VARANASI

1985

# प्रस्तावना

अथायमव्यवधानेनैवायं द्वितीयोऽपि भागः काशिकावृत्तेः पदमञ्जरीन्यास-सम्वलितायाः समर्प्यते गुणैकपक्षपातिभ्यो विद्वद्वरेभ्यः। अयमपि भागः प्रतिबिम्ब-ग्रहणविधिनैव मुद्रित इति कृत्वा प्रथमभाग इवात्रापि यथायथं पाठादिसंशोधनं न जातम्। यत्र कुत्रचिन्मुद्राप्य किञ्चित् संशोधनमपि कृतं तदपि सम्मार्जकानवधानेन साधु न सम्वृत्तम्। अतः क्रियतां पाठदोषाणां संशोधनमत्र प्रस्तावनायां क्रियते येन पाठकानां सौविध्यं स्यात्।

पद० (पृ० ४, पं० १) 'प्रथमे' इत्यत्र 'प्रथम' इति युक्तम्। अत्रैव (पृ० ५, पं० ३) 'स्वकार्यव्युत्पाद्यत्वेन' इत्यत्र 'स्वकार्यम्। व्युत्पाद्यत्वेन' इति पाठेन भाव्यम्। पद० (पृ० ६, पं० ९) 'सम्बद्धार्थता। व्यपेक्षा.....' इत्यत्र पूर्णविरामोऽ-युक्तः। पद० (पृ० ६, पं० १२) 'पुरुषमपेक्षते' इत्यतः परं मुद्रितः पूर्णविरामो वस्तुतः 'ममायमिति' इत्यतः परं देयः। अत्रैव पृष्ठे पद० (पं० १४) 'सम्बन्धोऽ-नियत.....' इत्यत्र 'सम्बन्धः। अनियत.....' इति रूपेणच्छेदः कार्यः। पद० (पृ० ७, पं० ६-७) 'ऋद्धस्य राजपुरुष इति। यथा ऋद्धस्य राज्ञः पुरुष इति तथा.....' इत्यत्र विरामाव्यवस्थयार्थबोधकाठिन्यं भवत्येव। अतो 'यथा ऋद्धस्य.....इत्यतः पूर्वं पूर्णविरामस्थानेऽर्धविरामो देयः। 'तथा.....' इत्यतः पूर्वं तु पूर्णविराम आव-श्यकः, तदन्तरं वाक्यान्तरारम्भात्। अत एव यथा तथेत्यत्र यदा तदेति पाठः कार्य इति श्रीवत्साङ्काचार्यकथनमर्थानवबोधविजृम्भितमिति स्पष्टमेव। अत्रैव पृष्ठे पद० (पं० १२) 'च योगश्च' इति' इत्यत्र 'चयोगश्च' इति' पठनीयम्, चकारस्य समुच्चयार्थकस्य योगः सम्बन्ध इति च तदर्थः। अत्रैव (पं० १३) 'सुपि अलोपश्च' इत्यत्र 'सुप अलोपश्च' इति युक्तम्। अत्र 'सुपः' इति षष्ठ्यन्तम्। अत्रैव पृष्ठे (पं० १७) 'तथा वर्णेषु' इत्यत्र वर्णशब्दः स्वघटितसमुदायविशेषात्मकपदार्थकत्वेन कथञ्चिद् व्याख्येयः। 'वाक्ये' 'वाक्येषु' वा तत्र पठितव्यम्। अत्रैव पृष्ठे (पं० १८-१९) प्रयोगनियमश्च पृथगर्थत्वेऽदृष्टः' इत्यत्र 'प्रयोगानियमश्च पृथगर्थत्वे दृष्टः' इति युक्तम्। अत एवाग्रे 'असति तु तत्र न दृष्टः' इत्यत्र पृथगर्थत्वेऽसति न दृष्ट इत्यर्थकेन पूर्वोद्दिष्टस्य प्रयोगानियमस्य वृत्तौ प्रतिषेध उपपद्यते। श्रीवत्साङ्काचार्येण तु 'पृथगर्थत्वेऽदृष्टः' इत्यत्रैव 'पृथगर्थत्वे दृष्टः' इति पठनीयमुक्तम्, तदयुक्तम्।

तथा हि सति वृत्तौ प्रयोगनियमस्यैवाग्रिमवाक्येन दर्शनाभाव उक्तः स्यात्। तत्र चासङ्गतिः स्पष्टैवेति नाधिकमत्र वक्तव्यम्। प्रयोगश्चात्र पौर्वापर्यम्। अत्रैव (पं० २०) 'पुरुषपदे' इत्यत्र 'राजपुरुषपदे' इति पाठ उचितः। 'वर्णेषु' इति पुनः पठ्यते, तस्य पूर्ववदेवार्थः। (पं० २१) 'अभेदेन' इत्यत्र 'अभेदे न' इति न-कारो विभज्य पाठ्यः। अस्यैव विवरणं 'वृत्तौ''''' इत्यादिना कृतम्। (पं० २४) 'तिष्ठति—ब्राह्मणस्य कम्बलः' इत्यत्र '—तिष्ठति ब्राह्मणस्य कम्बलः' इति पठनीयम्। एवमेव (पं० २५) 'तिष्ठति, ब्राह्मणकम्बल इति' इत्यत्र '—तिष्ठति ब्राह्मणकम्बल इति, 'इत्येवं युक्तं वचनम् (पं० २७) 'योगश्च' इत्यत्र 'चयोगश्च' इत्युचितम्। अयं च पाठो व्याख्यातपूर्व एवास्माभिः।

अत्रैव ( पं० १० ) 'तत्र' इति पदं पूर्ववाक्येन 'साम्प्रतम्' इत्यनेन 'सम्बद्धार्थानां संसृष्टार्थानामिति' च प्रतीकधारणम् इति' (पं १३) 'नोदयिष्यति' इत्यत्र 'चोदयिष्यति' इति शुद्धपाठपरिकल्पनं च श्रीवत्साङ्काचार्यकृतं व्यर्थमेवेति मन्यामहे।

पद० (पृ० ९, पं० १४) 'अत्र शक्यं वक्तुम्' इत्यत्र 'अत्र न शक्यं वक्तुम्' इति पाठ्यम्। सामर्थ्यमिति शेषः। पद० (पृ० १०, पं० ४) '''''प्येतदर्थत्वादेव' इत्यत्र '''''प्यतदर्थत्वादेव' इति युक्तम्। पद० (पृ० १२, पं० १) 'तन्निमित्तत्वाभावे तु न भवति' इत्यत्र 'तन्निमित्तत्वाभावे तु न भवेत्। सति तु तद्ग्रहणेऽत्रापि न भवति' इत्येतादृशं पाठान्तरमर्थसङ्गत्यर्थं कल्पनीयमिति प्रतीमः। अत्रैव (पृ० १४, पं० १२) 'स्वाश्रयं' इत्यतः पूर्वं 'ननु' अथवा 'यदि' इति संयोजनमावश्यकम्। अथवेतः पूर्वं पूर्णविरामः ततश्च (पं० १५) 'यक्प्रतिषेधे शप्' इत्यत्र प्रश्नचिह्नं देयम्। अत्रैव पृष्ठे (पं० १६) 'समानपदस्थत्वा''''' इत्यतः 'स्थ' इति निरस्यम्। यथामुद्रिते तु 'निमित्तनिमित्तिनोः' इत्यध्याहृत्यार्थः कार्यः। पद० (पृ० १३, पं० ५) 'परस्याङ्गवद्भावे' इत्यत्र 'परस्य पराङ्गवद्भावे' इति युक्तम्। अत्रैव पृष्ठे (पं० ६) 'पराङ्गवद्भावे' इत्यंशोऽधिकोऽपार्थकश्च। अतोयं निरस्यः। (पं० ११) 'पराङ्गवदित्यामन्त्रितं' इत्यत्र 'पराङ्गवदित्यत्रामन्त्रितं' इति स्पष्टतरम्। यद्वेतिशब्दस्यैवेत्यत्रार्थकत्वं कल्प्यम्। पद० (पृ० १६, पं० ६) 'न च प्रागित्यस्या''''' इत्यत्र 'न च परागित्यस्या''''' इति युक्तम्। न्यासे (पृ० १७, पं० ४) 'इत्यत्रकारः' इत्यत्र 'इत्यकारः' इति पठितव्यम्। वृत्तौ (पृ० १८, पं० ७) 'चेयं महती' इत्यतः परम् 'तेन' इति हरदत्तमतेन पाठ्यम्। पद० (पृ० २१, पं० ६) 'वस्त्वन्तरं' इत्यत्र 'वस्त्वन्तरत्वं' पठनीयम्। भावप्रधाननिर्देशादिना वा व्याख्येयम्। पद० (पृ० २१

पं० १) 'पुनर्वृद्धिग्रहणम्' इत्यत्र 'पुनर्व्यृद्धिग्रहणम्' इति युक्तम्। अत्रैव (पं० ६-७) 'अतिशीतमित्यर्थाभावः। काला·····' इत्यत्र 'अतिशीतमिति' इत्यतः परं पूर्णविरामो देयः, प्रतीकत्वादस्य। 'अर्थाभावः' इत्यनन्तरं स्थितः पूर्णविरामो निरस्य एव। पद० (पृ० २२, पं०) 'उपभोग्यम्। उष्णे शीते वा' इत्यत्र 'उपभोग्यम्, उष्णे शीते वा।' इति रूपेणैव विराम उचितः।

पद० (पृ० २४, पं० ४) 'शब्दास्तदर्थे ग्रन्था वर्त्तन्ते' इत्यत्र 'शब्दास्तदर्थे ग्रन्थे वर्त्तन्ते' इति पाठ्यम्। ग्रन्थशब्दस्य तु समूहैकत्वादेकत्वम्। पद० (पृ० २५, पं० ४-५) 'यावदित्यव्ययं·····विग्रहः' इति श्लोको गद्यरूपेण भ्रमान्मुद्रितः। श्लोकश्च—

यावदित्यव्ययं चास्ति तद्धितान्तं च विद्यते।
अतो नित्यसमासेऽपि तद्धितान्तेन विग्रहः॥ इति।

श्रीवत्साङ्काचार्योऽपि मन्यत एतत्। वयन्तु 'नित्ये समासेऽपि' इति परिवर्त्तनमुचितमवगच्छामः। पद० (पृ० २७, ७) 'अन्यथा वृत्तावयं' इत्यत्र 'अन्यथा-वृत्तावयं' इति युक्तम्। अन्यथावर्त्तनं च अन्यथावृत्तिशब्दार्थः। तत एव तत्रेत्या-दिनाऽन्यथावर्त्तनक्रियायामक्षादीनां कर्तृत्वमुक्तम्। पद० (पृ० २८, पं० ७) 'यथा पूर्वशकटे' इत्यत्र 'यथा पूर्वं शकटेन' इति संशोधनं कार्यम्। पद० (पृ० ५३, पं० १७) 'तादर्थ्यविसायः' इत्यत्र 'तादर्थ्याऽव्यवसायः' इति पठनीयम्। अत्रैव (पृ० ५४, पं० ८) 'षः प्रत्ययस्य' इत्यत्र 'ष्षः प्रत्ययस्य' इति शुद्धः पाठः। अस्मिन्नेव पृष्ठे (पं० २२) 'उदकार्थो वीवध' इति मुद्रितमासीत्। तच्च 'उदकाय वीवध उदकार्थं' इति रूपेणास्माभिः संशोधितम्। पद० (पृ ७४, पं० ७) '·····सामर्थ्येन' इत्यत्र 'सामर्थ्यम्। न' इति पाठ्यम्। एतं नकारमादाय (पं० ८) 'चेत्सामान्यवाचीति' अंशः प्रतीकरूपेण पाठ्यः। अत्र 'नञ् गलितः' इति श्रीवत्साङ्काचार्यकथनं तु नातीव युक्तं प्रतीयते। पद० (पृ० ७८, पं० ३-४)—

नत्वसौ नामधेयेन गाहते तुल्यकक्षताम्।
द्रागेव रूढौ प्रतिभा क्रियाशब्दे विलम्बिता॥ इति।

पद्यम् गद्यरूपेण मुद्रितमिति श्रीवत्साङ्काचार्येणापि निर्दिष्टमेव। पद० (पृ० ८५, पं० ९) 'पूर्वं वृत्ति·····' इत्यत्र 'पूर्ववृत्ति·····' इति पठनीयम्। इममेव—**'तथा च प्रत्युदाहरणमिति।** पूर्ववृत्तिषूपन्यस्तमुपपन्नं भवतीति शेषः।' इति पदमञ्जरी-ग्रन्थं ध्यायता तत्त्वबोधिनीकारेणोक्तम्—

"तथा च प्रत्युदाहृतं प्राचीनवृत्तिषु—कतरो भवतोर्देवदत्तः। कतमो भवतां देवदत्त इति" इति। एतेन यदुक्तं श्रीवत्साङ्काचार्येण—"तथा च प्रत्युदाहरणमिति न प्रतीकधारणम्, मूले तादृशवाक्याभावात्। ततश्च 'तथा च प्रत्युदाहरणं भवतीति पूर्ववृत्तिषु उपन्यस्तमिति शेषः' इति शुद्धः पाठः।" इति तत्प्रामादिकम्, सर्वत्रैव वृत्तावस्य सूत्रस्यान्ते "तथा च प्रत्युदाहरणम्—कतरो भवतोर्देवदत्तः। कतमो भवतां देवदत्तः॥" इत्यस्यांशस्योपलभ्यमानत्वात्। पद० (पृ० ८७, पं० ४-५)—

प्रशंसयेति वक्तव्ये वचनग्रहणादिह।
ग्रहणे रूढिशब्दानां प्रशंसामात्रवाचिनाम्॥

इति श्लोको गद्यरूपेण मुद्रितः। स चायं संशोध्य पठनीयो मनीषिभिः। पद० (पृ० ९०, पं० १:३) 'द्वयोः' इत्यारभ्य विशेषणं' इत्यन्तोंशः श्लोकद्वयात्मकः प्रमादाद् गद्यरूपेण मुद्रितः। 'वर्णश्चासौ वर्ण इति' इति च प्रमादादेव प्रतीकरूपेण मुद्रितः। वस्तुतस्तु नैवं वाक्यं वृत्तौ लभ्यते। श्लोकौ चेत्थं पठनीयौ—

द्वयोः स्वरूपग्रहणे न विशेषणता भवेत्।
वर्णश्चासौ वर्ण इति किं व्यावृत्तं किमन्वितम्॥
अथैकत्र विशेषाणां रूपस्यान्यत्र च ग्रहः।
शुक्लश्चासौ वर्ण इति न स्याद्वर्णो विशेषणम्॥ इति।

न्यासे (पृ० ९२, पं० ९) 'चतुष्पादो जातिवचना' इत्यत्र 'चतुष्पाज्जातिवचना' इति युक्ततरः पाठः। यथामुद्रितस्तु क्लिष्टार्थकः। पद० (पृ० १२१, पं० १२) 'एवमनातिङ्ग्रहणेन' इत्यत्र 'एवमनेनातिङ्ग्रहणेन' इति पाठ्यम्। न्यासे (पृ० १४७, पं० ५) 'प्राप्तस्य च बाधा व्याख्येयेति' प्रतीकपाठः 'प्राप्तस्य चाबाधा व्याख्येयेति' रूपेण संशोध्यः। न्यास एव (पृ० १४९, पं० ३) 'पुनरप्राप्तस्य' इत्यत्र 'पुनः प्राप्तस्य' इति साधुः पाठः। पद० (पृ० १५८ पं ८) 'भवतीत्यपवादत्वमेतद्' इत्यत्र भवतीत्यपवादत्वमेतस्य' इति पठितव्यम्। पद० (पृ० १८९, पं० २) 'वाऽसरूपत्रिधिनाऽस्वश्यं' इत्यत्र 'वाऽसरूपविधिनविश्यं' इति शुद्धः पाठः। न्यासे (पृ० १९४, पं० ९) 'एतदनुसारेण कारकार्हाणा.....' इत्यत्र 'एतदनुसारेणाऽकारकार्हाणा.....' इत्यस्माभिः संशोधितमेव। पद० (पृ० १९५, पं० १०) 'भूयो दर्शनाश्रयो' इत्यत्र 'भूयोदर्शनाश्रयो' इति समस्तः पाठ उचितः। अत्रैव पृष्ठे न्यासे (पं० २) 'संयोगः।' इत्यपपाठः, 'समवायः।' इत्युचितम्। यद्वा सम्बन्धसामान्यार्थकः 'योगः।' इत्येतावत् पठनीयम्। पद० (पृ० १९६, पं) 'पुनर्दर्शनम्' इत्यत्र 'पुनः पुनर्दर्शनम्' इत्युचितम्। पद० (पृ० १९८, पं० ९) 'यदाः' इत्यतो विसर्गो निरस्यः।

पद० (पृ० २१३, पं०) 'उत्तमाङ्गनामीदृशी' इत्यत्र 'उत्तमाङ्गनायामीदृशी' इति पाठ्यम्। अत्रैव पृष्ठे (पं० ५) 'सर्पिः स्वभावतया' इत्यत्र समस्तः पाठः कर्त्तव्यः। पद० (पृ० २१७, पं० ४) अवस्यन्दने' इति 'अवस्पन्दने' इत्यत्र मुद्रणाऽशुद्धः पाठः। पद० (पृ० २२६, पं० १२) '""समासेऽपि' इत्यत्र 'समासोऽपि' इति युक्तम्। पद० (पृ० २२९, पं० ६) 'पदार्थान्तरे' इत्यत्र 'यदार्ऽर्थान्तरं' इति पाठ्यम्। न्यासेऽत्रैव पृष्ठे (पं० १२) 'न भवति। इहेम आसिता इति चकारः""' इत्यत्र 'न भवति—इहेम आसिता इति। चकारः""' इति व्यवस्था विरामस्य कार्या। वृत्तौ (पृ० २४२, पं० ४) 'संकीर्त्तनम्' इत्यत्र 'संकीर्त्तनमात्रम्' इति पठनीयम्। पद० (पृ० २५२, पं० ३) 'तत्र भवाः' इत्यत्र 'तत्र भवः' इति शुद्धिः कार्या। न्यासे (पृ० ३९२, पं० १) 'उत्पत्तेः प्रभृत्या विनाशात्' इत्यत्र 'उत्पत्तेः प्रभृत्याविनाशात्' इति पठनीयम्।

पद० (पृ० ४६६, पं० ३) 'न लौकिकं क्रिया कर्म' इत्यत्र 'न लौकिकं क्रियाकर्म'' इति समस्तः पाठं उचितः। क्रियास्वरूपं कर्मेति तदर्थः। पद० (पृ० ५०६, पं० १) 'अर्थं चार्थं""' इति पाठो न समीचीनः प्रतीयते। 'एतदर्थं चार्थं""' इति सम्भाव्यते। पद० (पृ० ५११, पं० ५) 'पुष्पसिद्धशब्दौ' इत्यत्र 'पुष्पसिद्ध्यशब्दौ' इति पठनीयम्। पद० (पृ० ५१२, पं० २) 'यदजीषं' इत्यत्र 'यदजोषं' इति, (पं०३) 'विशेषेणेति' इत्यत्र च 'अविशेषेणेति' संशोधनीयम्।

पद० (पृ० ५४०, पं० ६-७) 'यदसज्जायते""तन्निर्वर्त्यम्' इति भर्तृहरिकारिकाया अंशो गद्यरूपेण मुद्रितः। कारिका चेयम्—

यदसज्जायते सद्वा जन्मना यत्प्रकाशते।
तन्निर्वर्त्यम्, विकार्यन्तु द्वेधा कर्म व्यवस्थितम्॥ इति।

अत्रैव पृष्ठे भर्तृहरिकारिकायां 'तत्रेप्सिततमम्' इति मुद्रितम्। किन्तु १।४।४९ सूत्रव्याख्यायान्तु 'तच्चेप्सिततमं' इति मुद्रितम्। तत्रैकेनैव पाठेन भाव्यम् उभयत्र। पद० (पृ० ५६०, पं० ३) 'वस्तुस्वरूपेणाचष्टे' इत्यत्र असमस्त एव पाठ उचितः। पद० (पृ० ५६३, पं० २) 'स्तनन्धयति' इति प्रतीकस्थाने 'स्तनन्धयीति' पठनीयम्। अत्र शब्दकौस्तुभदर्शनेन कियानंशोऽत्र पदमञ्जर्यां भ्रष्ट इवेति प्रत्येति श्रीवत्साङ्काचार्यः। वस्तुतस्तु नैतद् युक्तम्, कौस्तुभे तात्पर्यवर्णनमात्रत्वात्। एतच्च ३।२।२९ सूत्रस्थतत्त्वबोधिनीदर्शनेन नातिरोहितम्।

वृत्तौ (पृ० ५९५, पं० १) 'रेडसि पर्णं नयेः।' इत्यशुद्धः पाठः। अत्र "रेडसि। पर्णं न वेः।' इति पाठ्यम्। वस्तुतस्तु अत्र 'पर्णं न वेः' इत्यनावश्यकम्

अनुदाहरणत्वाद्विचः। पद० (पृ० ६०७, पं० २) 'मन्त्रमधी—' इत्यत्र 'मधी—' शब्दो निरस्यः। पद (पृ० ६०९, पं० ४) 'मा ग्राहि' इत्यतः पूर्वं 'स' इति पूरणीयम्। पद० (पृ० ६३१, पं० ३) 'कलिङ्गं' इत्यत्र 'कलिङ्गान्' इति पाठः श्रेयान्। पद० (पृ० ६३७, पं० ३) 'अप्रथमासमानाधिकरणं' इत्यत्र 'अप्रथमा' इति शब्दो विच्छिद्य पठनीयः, विग्रहवाक्यत्वादस्य। पद० (पृ० ६४२, पं० १२) 'चैतन्यलक्षणं पुरुष' इत्यत्र 'चैतन्यलक्षणः पुरुष' इति युक्तम्। पद० (पृ० ६४७, पं० ८) 'सूत्रेषु' इत्यत्र 'सत्रेषु' इत्युचितम्। पद० (पृ० ६८३, पं० ४) 'उदितामुदितां' इत्यत्र 'उदितामूदितां' इति युक्तम्।

एवमेवोद्धरणचिह्नान्यपि सर्वत्र न लभ्यन्ते। यथा—पद० (पृ० २१३, पं० १६) 'विशेषस्मृतेः संशय' वैशेषिकसूत्रांशे (पृ० ५८८, पं० ३) तुरासाहं पुरोधायेति ;कुमारसम्भवस्थपद्यांशे, पृतनाषाड् द्विषो योद्धुं पुरुहूत इत्यत्र, (पृ० ६७५, पं० २) विन्यस्तमङ्गलमहौषधिरीश्वराया इति भारविपद्यांशेऽन्यत्र च बहुत्र। एतेन पाठकानां कश्चित् क्लेशो जायत एव।

एतच्च ऱात्रं प्रदर्शितम्। वस्तुतस्तु अत्र टीकयोः, विशेषेण पदमञ्जर्यांम् सन्ति बह्व्योऽशुद्धयो विविधकारणप्रयुक्ताः। तासां सर्वासां संशोधनं प्रतिबिम्बग्रहणेऽल्पीयसि काले चासम्भवमिति क्षन्तव्योऽयं जनस्तदर्थम्। यदि कदाचिदीश्वरानुकम्पया सदवसरो लभ्येत तर्हि यथामति संशोधनं विधास्यते।

अन्ते च—

सुरेषु विघ्नैकपरेषु को नरः
करस्थमप्यर्थमवाप्तुमीश्वरः ॥

इति सूक्तिमनुस्मरन् मनीषिणामनुग्रहं कामयते—

श्रीनारायणमिश्रः

संस्कृत-विभाग,
का० हि० वि० वि०, वाराणसी।
दीपावली २०४१ वि० स०

# सूत्रसूची

❀ तस्मै श्रीगुरवे नमः ❀

# काशिकावृत्तिः

## अथ द्वितीयाध्याये प्रथमः पादः

### समर्थः पदविधिः ॥ १ ॥

परिभाषेयम् । यः कश्चिदिह शास्त्रे पदविधिः श्रूयते स सर्वः समर्थो वेदितव्यः ।

**पदमञ्जरी**

*समर्थः पदविधिः* ॥ *परिभाषेयमिति* । नाधिकारः, पदविधिग्रहणात्, अन्यथा वक्ष्यमाणानां पराङ्गवद्भावादीनां पदविधित्वाव्यभिचारादनर्थकं तत्स्यात् । परितः = सर्वतः-पूर्वत्र, परत्र, व्यवहिते च, अनन्तरे च—भाष्यते कार्यमनयेति करणे 'गुरोश्च हलः' इत्यकारप्रत्ययः । भावसाधन एव वाऽभेदोपचारात्सूत्रे प्रयुज्यते । इदंशब्दस्य सूत्रे प्रयुक्तस्यापि विधेयपरिभाषाशब्दसामानाधिकरण्यात् स्त्रीलिङ्गता । *स सर्व इति* । ननु यः कश्चित्पदविधिरिति सामान्यनिर्देशेनैव तद्धर्मभूता व्याप्तिरुक्ता, किं सर्वग्रहणेन ? नैतदस्ति; 'यः कश्चिद् ब्राह्मण आनीयताम्' इत्युक्ते क्षत्रियादिनिवृत्तिः प्रतीयते, न व्याप्तिः ।

**न्यासः**

**समर्थः पदविधिः ॥ परिभाषेयमिति** । परितो व्यापृता भाषा=परिभाषा । तथा चोक्तम्[1]–'परिभाषा पुनरेकदेशस्था सर्वं शास्त्रमभिज्वलयति, यथा—वेश्म प्रदीपः' । कुतः पुनरेतद् विज्ञायते—परिभाषेयम्, नाधिकार इति ? पदविधिग्रहणाल्लिङ्गात् । उत्तरत्र हि सर्वः पराङ्गवद्भावादिरनुक्रंस्यमानः पदविधिरेव । तत्र यद्ययमधिकारः स्यात्, पदविधिग्रहणमनर्थकं स्यात्; व्यावर्त्त्याभावात् । परिभाषायां त्वस्याम्, परिभाषा ह्येकदेशस्थापि सर्वत्र शास्त्रे व्याप्रियत इत्यसति पदविधिग्रहणे वर्णविधावप्युपतिष्ठेत । ततो वर्णविधिनिरासार्थं क्रियमाणं पदविधिग्रहणमर्थवद्भवति । तस्मात् पदविधिग्रहणाल्लिङ्गात् परिभाषेयं नाधिकार इत्यवसीयते । यद्येवम्, 'इसुसोः सामर्थ्ये', 'न चवाहाहैवयुक्ते' इत्येवमादिषु योगेषु सामर्थ्यग्रहणं युक्तग्रहणञ्च किमर्थं क्रियते, यावता 'पदस्य' इति तत्रानुवर्तते, तत्र पदविधित्वादेवासामर्थ्ये न भविष्यति ? सत्यमेतत्; यदर्थं तु क्रियते तत् तत्रैव प्रतिपादयिष्यामः ।

---

१. प्रकृतसूत्रभाष्ये इति शेषः ।

विधीयत इति विधिः, पदानां विधिः = पदविधिः। स पुनः समासादिः।

पदमञ्जरी

प्रथमपठितमपि समर्थशब्दमुल्लङ्घ्योद्देश्यसमर्पकत्वबलादार्थेन क्रमेण प्रथमं भाविनं पदविधिशब्दं व्याख्यास्यन्विधिशब्दः कर्मसाधन इति दर्शयति—*विधीयत इति विधिरिति*। कार्यमित्यर्थः। *पदानामिति*। शेषलक्षणा षष्ठी। पदानां सतां यत्कार्यं विधीयत इत्यर्थः। यदि तु भावसाधनो विधिशब्द आश्रीयेत–विधानं विधिरिति, ततः पदेषु कृद्योगलक्षणा कर्मणि षष्ठी–पदानामसतां निष्पादनं पदविधिरिति, तत्र समासतद्धितसुब्धातुवृत्तयो न संगृहीताः स्युः। तत्र हि पदानां सतां समासादिकार्यं विधीयते, न पुनः पदत्वम्। ननु च कर्मसाधनपक्षेऽपि विभक्तिविधानमसंगृहीतं स्यात्, पदान्येव हि तत्र विधीयन्ते न तु पदानां सतां किञ्चिद्? उच्यते—'कर्मणि द्वितीया' इत्यादिना तु नियमः क्रियते, न पदविधिः। अथाप्येकवाक्यतया स्वादिसूत्रेण विभक्तीनां विधानम्? एवमपि कारकविभक्तिषु तावत्क्रियाकारकयोरविनाभूतः सम्बन्धः, उपपदविभक्तीनां तु 'अन्तरान्तरेणयुक्ते' इत्यादीनामुपसर्गविभक्तीनां च 'नेर्विशः' इत्यादीनामेकवाक्यतायां भिन्नवाक्यतायां च पदविधित्वमस्त्येव; उपपदानामुपसर्गाणां च पदत्वात्। संमासादिरित्यादिशब्देन तद्धितवृत्त्यादीनां ग्रहणम्, तद्धिता अपि सुबन्तादुत्पद्यन्ते। 'समर्थानां प्रथमाद्वा' इत्यस्य तु समर्थग्रहणस्य प्रयोजनं तत्रैव वक्ष्यामः।

न्यासः

विधिशब्दोऽयमस्त्येव भावसाधनः–विधानं विधिरिति, अस्ति च कर्मसाधनः—विधीयत इति विधिः। तत्र भावसाधने विधिशब्द आश्रीयमाणे पदानामपरिनिष्पन्नानां परिनिष्पादनं पदविधिरिति पदेषु कर्मणि कृद्योगलक्षणा षष्ठी; तेषां विधिना सम्बन्धात्। कर्मसाधने तु परिनिष्पन्नानां व्यवस्थितानामेव पदानां यत् समासादि कार्यं विधीयते स पदविधिः। तत्र पदेषु च शेषलक्षणा षष्ठी भवति; विधीयमानस्य कार्यस्य पदसम्बन्धित्वेनोपादानात्। तत्र यदीह भावसाधनो विधिशब्द आश्रीयेत तदा विभक्तिविधानमेव संगृहीतं स्यात्, समास-पराङ्गवद्भाव-तद्धितवृत्त्यादिकं न संगृह्येत; न हि तत्र पदानामसतां विधानम्, किं तर्हि? व्यवस्थितानामेव पदानां समासादि कार्यं विधीयते। इतरत्र तु विधिशब्द आश्रीयमाणे तेऽपि संगृहीता भवन्तीति मन्यमानः कर्मसाधनं विधिशब्दमाश्रित्याह—विधीयत इति विधिरिति। ननु चात्रापि पक्षे विभक्तिविधानं न संगृह्येत, न हि 'कर्मणि द्वितीया' इत्येवमादिशास्त्रेण व्यवस्थितानां पदानां किञ्चित् कार्यं विधीयते, अपि तु पदान्येव विधीयन्ते? यदि न संगृहीतं स्यान् न नाम। न च तदसंग्रहे किञ्चिदनिष्टमापद्यत इत्युत्तरत्र प्रतिपादयिष्यामः। समासादिरिति। आदिशब्देन तद्धितवृत्त्यादीनां ग्रहणम्।

समर्थः = शक्तः । विग्रहवाक्यार्थाभिधाने यः शक्तः स समर्थो वेदितव्यः ।

पदमञ्जरी

एवम् 'इसुसोः सामर्थ्ये' इत्यादीनामपि समर्थः शक्त इति; तत्रैव समर्थशब्दस्य रूढत्वात् । स्वकार्यनिष्पादनक्षमो हि लोके 'समर्थः' इत्युच्यते । अर्थप्रतिपादनं च शब्दानां स्वकार्यम्। व्युत्पाद्यत्वेन चाधिकृता लौकिकाः वैदिकाश्च यस्य कस्यचित्प्रतिपादने समर्थाः, उच्यते चेदं समर्थ इति, तत्र सामर्थ्याद्विशेषोऽवगम्यते, स तु विशेषः प्रत्यासत्तेरेवंरूप इत्याह—*विग्रहवाक्यार्थाभिधाने इति* । विशेषेण गृह्यते = ज्ञायतेऽनेन समासार्थ इति विग्रहः । तादृशं च तद्वाक्यं चेति विशेषणसमासः । यद्वा–विशेषेण ग्रहणं विग्रहः, तदर्थं वाक्यं विग्रहवाक्यम्, अश्वघासादिवत्षष्ठीसमासः । अथ वा–अभेदोपचाराद्विग्रहार्थवाक्यं विग्रह इति विशेषणसमासः, तद्यथा–राजपुरुष इत्ययं समासः, तदर्थं विग्रहवाक्यं राज्ञः पुरुष इति, अस्य योऽर्थस्तदभिधाने राजपुरुषशब्दः समर्थः; अतोऽपि तत्प्रतीतेः, स पुना राजविशिष्टः पुरुषः । *समर्थो वेदितव्य इति* । साधुत्वेनेति शेषः । यः

न्यासः

समर्थः शक्त इति । स्वकार्यनिर्वर्त्तनक्षम इत्यर्थः । स हि लोके समर्थ इत्युच्यते । स्वार्थप्रतिपादनमेव शब्दानां स्वकार्यम् । ये चेह लौकिका वैदिकाश्च शब्दा अधिकृतास्ते सर्वे एवं स्वकार्यप्रतिपादनं प्रति समर्थाः । तस्मात् 'समर्थः' इति विशेषणोपादानसामर्थ्याद्विशेषः कश्चिदाश्रीयते । स च विशेषः—वृत्त्यर्थं यद्वाक्यमुपादीयते, प्रत्यासत्तेस्तदर्थप्रतिपादने या शक्तता तल्लक्षणो विज्ञायत इत्याह–विग्रहवाक्यार्थाभिधान इत्यादि । विशेषेण गृह्यते विज्ञायतेऽनेनेति विग्रहः, विग्रहश्च तद्वाक्यञ्चेति विग्रहवाक्यम् । अथ वा—विशेषेण ग्रहणं विग्रहः, विग्रहार्थं यद्वाक्यं तद् विग्रहवाक्यम् । शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । विग्रहवाक्यस्यार्थो विग्रहवाक्यार्थः, तदभिधाने तत्प्रत्यायने यः शक्तः स समर्थो वेदितव्यः, यथा—राजपुरुष इत्ययं समासः, एतदर्थं यद्वाक्यं राज्ञः पुरुष इति तस्य योऽर्थस्तदभिधाने राजपुरुष इत्ययं शब्दः शक्तः; ततोऽपि तदर्थस्य प्रतीतेः । स पुनरर्थः—संसर्गः, भेदश्च; भेदससर्गौ वा । तत्र स्वविशेषस्य स्वामिविशेषेण स्वामिविशेषस्य च स्वविशेषेण यः सम्बन्धः स 'संसर्गः' आख्यायते । स्वान्तरस्य स्वाम्यन्तरेभ्यः, स्वाम्यन्तरस्य स्वान्तरेभ्यश्च व्यावृत्तिः 'भेदः' आख्यायते ।

तत्र संसर्गवादिनो मते संसर्ग एव शब्दार्थः, व्यावृत्तिस्त्वर्थसंगृहीता । न ह्यव्यावर्त्त्यमानयोः स्वस्वामिनोः सम्बन्ध्यन्तरेभ्यः संसर्ग उपपद्यते । भेदवादिनस्तु व्यावृत्तिरेव शब्दार्थः, संसर्गोऽर्थसंगृहीतः; न हि व्यावर्त्त्यमानस्य सम्बन्ध्यन्तरेणा-

अथ वा समर्थपदाश्रयत्वात् समर्थः । समर्थानां पदानां सम्बद्धा-

पदमञ्जरी

पदविधिः स विग्रहवाक्यार्थाभिधाने समर्थः सन्साधुर्भवतीत्यस्मिन्पक्षे सूत्रार्थः, नार्थान्तरं साधीयः पश्यामः ।

तत्तु सामर्थ्यं प्रयोगतोऽनुसर्त्तव्यम् । न पुनरियं वृत्तिरस्य वाक्यस्यार्थाभिधानसमर्था, नान्यस्येत्येतत्सूत्राक्षरैर्लभ्यते । अत एवास्मिन्व्याख्यानेऽपरितुष्टः सन्व्याख्यानान्तरमाह—*अथ वेति* । अत्र पक्षे उपचरितवृत्तिः समर्थशब्दः, तदाह—*समर्थपदाश्रयत्वादिति* । समर्थानि पदान्याश्रयो यस्य स तथोक्तः । अन्वर्थश्च समर्थशब्दो न रूढ इत्याह—*समर्थानां पदानां सम्बद्धार्थानां संसृष्टार्थानामिति* । यः पदानां विधिः स समर्थानां वेदितव्यः । समर्थानामिति कोऽर्थः ? संबद्धार्थानां संसृष्टार्थानां वेत्यर्थः । तत्र वाक्ये संबद्धार्थता । व्यपेक्षा हि तत्र सामर्थ्यम् । अन्योऽन्यापेक्षा = व्यपेक्षा । आकांक्षासन्निधियोग्यत्वेषु सत्सु यः परस्परसम्बन्धः सा व्यपेक्षा । वाक्ये हि 'राज्ञः' इति पदमनियतसंबन्ध्यपेक्षयोद्भूतसंबन्धं विशेषणभूतमर्थमाचष्टे, स्वसंनिहितं योग्यं च पुरुषमपेक्षते । ममायमिति 'पुरुषः' इत्येनेनापि पुरुषः स्वनिष्ठोऽभिधीयमानः स्वसंनिहितं राजत्वमवच्छेदकत्वेनापेक्षते—अहमस्येति । अतो विशेषणविशेष्यभावेन सम्बन्धोऽनियतसंबन्धिविषयत्वा-

न्यासः

सम्बद्धस्य स्वाम्यादेरवस्थानमस्ति । उभयवादिनस्तु उभय एव शब्दार्थः । यदि विग्रहवाक्यार्थाभिधाने यः शक्तः स समर्थो विज्ञायेत, एवं सति समासतद्धितविषयमेव सामर्थ्यमिति पराङ्गवद्भावविभक्तिविधानयोरियं परिभाषा नोपतिष्ठेत; न हि तत्र विग्रहवाक्यार्थाभिधानमस्ति ? यदि नोपतिष्ठेत, न नाम; न च तदनुपस्थाने किञ्चिदनिष्टमापद्येत । तथा हि—पराङ्गवद्भावे तावन्निमित्तग्रहणं दर्शयिष्यति भाष्यकारः । तत्र च निमित्तस्य निमित्तिना सामर्थ्यमस्त्येव—मद्राणां राजन् , परशुना वृश्चन्निति । विभक्तिविधानेऽपि यास्तावत् कारकविभक्तयस्ता येष्वेव कारकेषु कर्मादिषु विधीयन्ते तेषां क्रियया सम्बन्धोऽस्त्येव । उपपदविभक्तिष्वपि 'सहयुक्तेऽप्रधाने' इत्येवमादिषु युक्तग्रहणादीनि सन्ति, तत्रापि सामर्थ्यमस्त्येव । तत्रैवं सम्बन्धे सति विभक्तय इष्यन्ते, न तु विग्रहवाक्यार्थाभिधानलक्षणसामर्थ्ये । एवं तावन्मुख्यार्थवृत्तिः समर्थशब्दो दर्शितः ।

इदानीमुपचरितवृत्तिं दर्शयितुमाह—*अथ वेत्यादि* । समर्थानि पदान्याश्रयो यस्य स समर्थपदाश्रयः, तद्भावः समर्थपदाश्रयत्वम् । ततो हेतोः समासादिः समर्थ उच्यते । आश्रयस्य समर्थत्वादुपचारेणाश्रितोऽपि तथेति व्यपदिश्यते; कारणधर्मस्य कार्ये उपचारात्, यथा—नड्वलोदकं पादरोगः । 'समर्थानाम्' इत्यनेन वाक्ये व्यपेक्षालक्षणं

पदमञ्जरी

न्चापेक्षया यो यः सन्निहितो योग्यश्च तेन सम्बध्यते—राज्ञः पुरुषश्चाश्वश्च, राज्ञो देवदत्तस्य च पुरुष इति, नार्थान्तरस्य। वृत्तौ तु संसृष्टार्थता। एकार्थीभावो हि तत्र सामर्थ्यम्। वृत्तौ हि राजपदं राजानमभिधाय न तावति पर्यवस्यति, पुरुषमप्याचष्टे, यथा—'गङ्गायां घोषः' इति गङ्गापदं तीरम्। यदि तु तावत्येव पर्यवस्येत्ततो यथा वाक्ये राज्ञः पुरुषोऽश्वश्चेति द्वाभ्यां सम्बन्धो भवति, तथा राजपुरुषोऽश्वश्चेत्यत्रापि स्यात्। स्वविशेषणसम्बन्धोऽपि स्याद्—ऋद्धस्य राजपुरुष इति। यथा ऋद्धस्य राज्ञः पुरुष इति तथा पुरुषपदमपि राजविशिष्टमेव पुरुषमाचष्टे, न पुरुषमात्रम्। यदि तथा स्यात्ततो यथा वाक्ये राज्ञः पुरुषो देवदत्तस्य चेति द्वाभ्यां सम्बन्धो भवति, तथा राजपुरुषो देवदत्तस्य चेत्यपि स्यात्। अतो यस्य विशेषस्य भावादयं विशेषः स एकार्थीभावः।

भाष्योक्ताश्चापरे विशेषाः—'सुबलोपो व्यवधानं यथेष्टमन्यतरेणाभिसम्बन्धः स्वरभेदश्च संख्याविशेषो व्यक्ताभिधानमुपसर्जनविशेषणं च योगश्च' इति। तथा सुपि अलोपश्च भवति वाक्ये–राज्ञः पुरुषः, नीलमुत्पलमिति; समासे तु द्वयोरेकस्मिन्विशिष्टेऽर्थे वृत्तेः पृथगर्थाभावात्स्वभावत एव विभक्तिर्निवर्त्तते। सैव च स्वाभाविकी निवृत्तिः शास्त्रेणान्वाख्यायते–'सुपो धातुप्रातिपदिकयोः' इति प्रत्ययलक्षणेन नलोपादिपदकार्यं यथा स्यादिति। पृथगर्थाभावे तु पृथग्विभक्तिर्न भवति। तथा वर्णेषु व्यवधानं च पृथगर्थत्व एव दृष्टम्—राज्ञ ऋद्धस्य पुरुष इति, असत्यदृष्टम्, यथा–राजपुरुषपदे न मध्ये पदान्तरं प्रक्षिप्यते। प्रयोगनियमश्च पृथगर्थत्वेऽदृष्टः—राज्ञः पुरुषः पुरुषो राज्ञ इति। असति तु तत्र न दृष्टः, यथा–पुरुषपदे। वर्णेषु स्वरभेदोऽपि पृथगर्थत्व एव दृष्टः—राज्ञः पुरुष इति। द्वावपि नित्स्वरेणाद्युदात्तौ। अभेदेन दृष्टः, यथा—पुरुष इति। वृत्तौ चैकस्वर्यं दृश्यते। किं च, संख्याविशेषोऽवगम्यते पृथगर्थेषु—राज्ञः राज्ञोः राज्ञां पुरुष इति। वृत्तौ त्वभेदैकत्वसंख्या गम्यते, तदेतत् 'अलुगुत्तरपदे' इत्यत्रोपपादयिष्यामः। व्यक्तं चाभिधानं पृथगर्थेषु तिष्ठति—ब्राह्मणस्य कम्बल इति। वृत्तौ त्वव्यक्तमभिधानं तिष्ठति, ब्राह्मणकम्बल इति सन्देहो भवति—संबुद्धिर्वा स्यात्? षष्ठीसमासो वा? इति, न चात्र स्वरान्निर्णयः। वाक्येऽप्यामन्त्रितनिघातः कम्बलशब्दो घृतादित्वादन्तोदात्तः, समासेऽप्यन्तोदात्तता। उपसर्जनविशेषणं च व्याख्यातम्। योगश्च भवति पृथगर्थेषु—राज्ञो गौश्चाश्वश्च कम्बलश्चेति। वृत्तौ त्वेकार्थ्याद्भेदनिबन्धनस्य समुच्चयस्याभावाच्चशब्दो निवर्त्तते—राज्ञो गवाश्वकम्बला इति, तदेतैर्विशेषैर्विज्ञायते संभिन्नोभयरूपः पांसूदकवदविभागापन्नो वृत्तावर्थ इति। तेन राज्ञः पुरुषमानय राजपुरुषमानयेति च यद्यप्येक एवानीयत इति कार्ययोगिनोऽभेदस्तथाप्यभिधानप्रकारो भिद्यते, यथा–ब्राह्मणाः शतं भोज्यन्ताम्, ब्राह्मणानां शतं भोज्यतामिति।

र्थानां संसृष्टार्थानां विधिर्वेदितव्यः । वक्ष्यति—"'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः'—कष्टं श्रितः कष्टश्रितः । समर्थग्रहणं किम् ? पश्य देवदत्त कष्टम्, श्रितो विष्णुमित्रो गुरुकुलम् । 'तृतीया

पदमञ्जरी

तदेवं वृत्तिवाक्ययोरर्थो भिद्यत इति स्थितम् । एवं च तत्र तत्र वावचनं चिन्त्यप्रयोजनम्; भिन्नार्थया वृत्त्या वाक्यस्य बाधाऽप्रसङ्गात् ।

अन्ये तु जहत्स्वार्था वृत्तिरिति वदन्तो वर्त्तिपदानामानर्थक्यमेवाहुः, तत्तु न रोचयामहे । किं राजपुरुष इत्यत्र राजार्थो न गम्यते ? ओमिति चेत्, पुरुषमात्रानयनं प्राप्नोति । अथ गम्यते ? किंनिबन्धना तस्यावगतिः ? न तावत् समासस्य तत्र शक्तिः कल्प्या; राजशब्दनिबन्धनायामपि तस्यामनर्थाभावात् । न च वाक्ये राजपदं व्युत्पन्नं पुनः समासे व्युत्पत्तिमपेक्षते, तावत्येव च प्रतिपद्यते राजार्थः । अतो न जहत्स्वार्था वृत्तिः, अर्थाभिधानप्रकारभेद इत्येतदेव सांप्रतम् ।

तत्र सम्बद्धार्थानां संसृष्टार्थानामिति सामर्थ्यद्वयमपि स्थितं परिभाषाप्रवृत्तौ हेतुर्नान्यतरत्, यतो मा भूद्व्यपेक्षामात्राश्रयेण सापेक्षस्यापि वृत्तिः । यद्येवम्, पराङ्गवद्भावे विभक्तिविधाने च सा न प्रवर्त्तेत; तत्रैकार्थीभावस्यासम्भवात् । मा प्रवर्त्तिष्ट, पराङ्गवद्भावे तन्निमित्तग्रहणं नोदयिष्यति । विभक्तिविधानेऽपि क्रियाकारकयोर्व्यपेक्षाऽविनाभाविनी, क्वचिद्युक्तग्रहणम्; क्वचिद्योगग्रहणम्, क्वचित् तृतीयया योगस्याक्षेप इति न कापि दोषः । अत एवानन्तरमपि पराङ्गवद्भावमुल्लङ्घ्य समासमुदाहरति—*वक्ष्यतीति* ।

*समर्थग्रहणं किमिति* । सूत्रं किमर्थमित्यर्थः । न हि केवलेन पदविधिग्रह-

न्यासः

सामर्थ्यमाह । तथा हि 'राज्ञः पुरुषः' इत्यत्र वाक्ये राजा पुरुषमपेक्षते—ममायमिति, पुरुषोऽपि राजानमपेक्षते—अहमस्येति । संसृष्टार्थानामित्यनेन समासे पदानामेकार्थीभावलक्षणं सामर्थ्यं दर्शयति । एकार्थीभावश्च पृथगवस्थितानां भिन्नार्थानां पदानां समासे साधारणार्थता नामावस्थाविशेषः । वाक्ये हि साधारणार्थता नास्ति; भिन्नार्थत्वात् । अत एव तत्र भेदनिबन्धना षष्ठ्युपजायते—राज्ञः पुरुष इति । वृत्तौ तूभयपदव्यवच्छिन्नार्थाभिधानात् साधारणार्थता भवति । एतेनैतदुक्तं भवति—समासे हि विशेषणं विशेष्यमनुप्रविशत्येकार्थीभवति विशेष्येण सह, वाक्ये हि विशेषणं विशेष्यात् पृथगवतिष्ठत इति । यस्मिन्नसति, वाक्ये राज्ञो गौश्चाश्वश्च पुरुषश्चेति भेदनिबन्धनसमुच्चयप्रतिपादनाय चशब्दः प्रयुज्यते । समासे तु यस्मिन् सति स निवर्त्तते राज्ञो गवाश्वपुरुषा इत्ययमेकार्थीभावो वेदितव्यः । पश्य देवदत्त कष्टम्, श्रितो विष्णुमित्रो

तत्कृतार्थेन गुणवचनेन'—शङ्कुलया खण्डः शङ्कुलाखण्डः। समर्थग्रहणं किम्? किं त्वं करिष्यसि शङ्कुलया, खण्डो देवदत्त उपलेन।

**पदमञ्जरी**

णेन किञ्चित्क्रियते। *पश्येत्यादि*। ननु च श्रितादिभिर्द्वितीयां विशेषयिष्यामः—श्रितादियोगे या द्वितीयेति। एवमपि सापेक्षस्य प्रसङ्गः—महत्कष्टं श्रित इति, भवति ह्यत्र श्रितादिनिमित्ता द्वितीया, समर्थग्रहणे तु सति न भवति। यद्यप्यत्र वाक्यावस्थायां व्यपेक्षालक्षणसामर्थ्यमस्ति, वृत्त्यवस्थायान्तु नैकार्थीभावः संभवतीत्यवोचाम। कथं तर्हि देवदत्तस्य गुरुकुलमिति सापेक्षस्य वृत्तिः? नात्र गुरुणा देवदत्तस्य सम्बन्धः; किं तर्हि? समुदायेन, गुरुद्वारकश्च कुलेन सम्बन्ध इत्यर्थाद् गुरुणापि योगो भवति। उक्तं च—

समुदायेन सम्बन्धो येषां गुरुकुलादिना।
संस्पृश्यावयवांस्तेऽपि युज्यन्ते तद्वता सह॥ इति।

अथ वा—परिपूर्णार्थस्यान्येन सहैकार्थीभावः स्वार्थपरिपूर्त्तिश्च सम्बन्धिशब्दस्य प्रतियोगिनेति भवति तदपेक्षस्यापि वृत्तिः। उक्तं च —

सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः प्रयुज्यते।
स्वार्थवत्सा व्यपेक्षाऽस्य वृत्तावपि न हीयते॥ इति।

किं त्वं करिष्यसीत्यादि अत्र शक्यं वक्तुम्। *तत्कृतार्थेनेति*। तच्छब्दः प्रकृतपरामर्शाय। तृतीयान्तं समस्यते—तदर्थेन यः कृतो गुणस्तद्वचनेनेति। अत्र च यस्य समासः शङ्क्यते—शंकुलयेति, न तदर्थेन कृतं खण्डनम्; यदर्थेन च कृतं

**न्यासः**

गुरुकुलमिति। अत्र कष्टशब्दस्य पश्येत्यनेन सम्बन्धः, न तु श्रितशब्देन; तेन सामर्थ्याभावात् समासो न भवति। ननु च श्रितादीनां श्रुतत्वात् तैरेव द्वितीयां विशेषयिष्यामः—श्रितादीनां सम्बन्धिनी या द्वितीयेति, का च श्रितादीनां द्वितीया? या श्रितादिनिमित्ता; न चेह श्रितादिनिमित्ता द्वितीया, किं तर्हि? पश्यतिक्रियानिमित्ता, तत् किमेतन्निवृत्त्यर्थेन समर्थग्रहणेन? नैतदस्ति; समर्थग्रहणे सति श्रितादीनां द्वितीयेति शक्यते व्यपदेष्टुम्। असति तु तस्मिन्, द्वितीयामात्रं श्रितादिभिः समस्यत इति विज्ञायते। एवं सापेक्षस्यापि समासः स्यादेव—महत् कष्टं श्रित इति, भवति ह्यत्र श्रितादिनिमित्ता द्वितीया। तस्मात् समर्थग्रहणं कर्त्तव्यम्। किं त्वं करिष्यसि शङ्कुलया, खण्डो देवदत्त उपलेनेति। अत्रोपलेन तृतीयान्तेन कृतं खण्डनम्। अतस्तत्कृतत्वमस्तीति प्राप्नोति समासः, समर्थग्रहणान्न भवति। समर्थग्रहणे तु सत्ययमर्थो भवति—यस्यैव तृतीयान्तस्य समासस्तेनैव यदि कृतं खण्डनमिति। न चेह तत्कृतं खण्डनमतो न भवति समासः। एवमन्यत्राप्यसामर्थ्यादसमासो वेदितव्यः।

'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः'—यूपाय दारु यूपदारु । समर्थ-ग्रहणं किम् ? गच्छ त्वं यूपाय, दारु देवदत्तस्य गेहे । 'पञ्चमी भयेन'—वृकेभ्यो भयं वृकभयम् । समर्थग्रहणं किम् ? गच्छ त्वं मा वृकेभ्यः, भयं देवदत्तस्य यज्ञदत्तात् । 'षष्ठी'—राज्ञः पुरुषो राज-पुरुषः । समर्थग्रहणं किम् ? भार्या राज्ञः, पुरुषो देवदत्तस्य । 'सप्तमी शौण्डैः'—अक्षेषु शौण्डः अक्षशौण्डः । समर्थग्रहणं किम् ? शक्तस्त्व-मक्षेषु, शौण्डः पिबति पानागारे ।

पदग्रहणं किम् ? वर्णविधौ समर्थपरिभाषा मा भूत् । तिष्ठतु दध्यशान त्वं शाकेन । तिष्ठतु कुमारीच्छत्रं हर देवदत्तात् । यणा-देशो नित्यश्च तुग्भवति ॥

पदमञ्जरी

खण्डनमुपलेनेति, न तस्य समासः शङ्क्यत इति न भविष्यतीति । तस्मान्महत्या शंकुलया खण्ड इति सापेक्षमुदाहर्त्तव्यम् । *गच्छ त्वं यूपायेति* । 'गत्यर्थकर्मणि' इति चतुर्थी । यद्वा—'क्रियार्थोपपदस्य च कर्मणि' इति, यूपमाहर्त्तुं गच्छेति, अत्रा-प्येतदर्थत्वादेव दारुणो न भविष्यतीति सापेक्षं प्रत्युदाहर्त्तव्यम्–महते यूपाय दार्विति ।

*यणादेशो नित्यश्च तुग्भवतीति* । द्वावप्येतौ वर्णविधी, नित्यस्तुक् च 'दीर्घात्' इत्ययमेव, यस्तु 'पदान्ताद्वा' इति विकल्पितस्तुक् स पदविधित्वादत्र न भवति ।

अन्ये तु यणादेशोऽनित्यश्च तुग्भवतीत्यकारप्रश्लेषं वर्णयन्तः 'पदान्ताद्वा' इति विकल्पितस्तुग्भवतीति व्याचक्षते । नन्वसौ पदविधिर्नेति ? आह–तत्रान्तग्रहणं न कर्तव्यम्, प्रकृतेन दीर्घेण पदस्य विशेषणादेव दीर्घान्तस्य पदस्येति सिद्धम् । एवं सिद्धेऽन्तग्रहणस्यैतत्प्रयोजनम्–पदान्तस्य दीर्घस्य वर्णस्य विधिस्तुग् यथा स्यात्, दीर्घान्तस्य पदस्य मा भूदिति ॥

न्यासः

यणादेशो नित्यश्च तुग् भवतीति । द्वावप्येतौ वर्णविधी । तेनासामर्थ्येऽपि भवतः । नित्यश्च तुग् भवति 'दीर्घात्' इत्यनेन । यस्तु 'पदान्ताद्वा' इत्यनेन विकल्पितस्तुग् विधीयते स पदविधिः, अतोऽसामर्थ्ये न भवति ।

अन्ये तु यणादेशोऽनित्यश्च तुग् भवतीत्यकारप्रश्लेषं वर्णयन्ति । एवञ्चाहुः—'पदान्ताद्वा' इत्यनेन विकल्पितस्तुग् भवतीति । 'पदान्ताद्वा' इत्यत्र ह्यन्तग्रहणस्यै-तदेव प्रयोजनम्—पदान्तभक्तस्तुगागमो यथा स्यात्, पदभक्तो मा भूदिति । तेन विकल्पितो यस्तुग् विधीयते स पदविधिर्न भवति । तेनासामर्थ्येऽपि भवति ॥

## सुबामन्त्रिते पराङ्गवत्स्वरे ॥ २ ॥

सुबन्तमामन्त्रिते परतः परस्याङ्गंवद्भवति, स्वरे = स्वरलक्षणे कर्तव्ये । तादात्म्यातिदेशोऽयम् । सुबन्तमामन्त्रितमनुप्रविशति । वक्ष्यति—'आमन्त्रितस्य च', आमन्त्रितस्यादिरुदात्तो भवति । स ससुप्कस्यापि यथा स्यात् । कुण्डेनाटन् । परशुना वृश्चन् । मद्राणां राजन् । कश्मीराणां राजन् ।

### पदमञ्जरी

*सुबामन्त्रिते पराङ्गवत्स्वरे* । *परस्याङ्गवदिति* । तस्यैव पदस्यामन्त्रितस्याङ्गवदेकदेशवद्भवति, तद्ग्रहणेन गृह्यत इत्यर्थः । *तादात्म्यातिदेशोऽयमिति* । अङ्गशब्दस्यावयववचनत्वात् तस्यामन्त्रितस्यात्मा तदात्मा, तस्य भावस्तादात्म्यम्, तत्स्वभावत्वमित्यर्थः । एतदेव स्पष्टयति—*सुबन्तमिति* । अनुप्रविशति = अन्तर्भवति, सुबन्तामन्त्रितसमुदाय एकस्मिन्नामन्त्रिते संपन्ने यः स्वरः शक्यते कर्तुं स कर्त्तव्य इत्यर्थः । कः पुनरसौ ? आद्युदात्तत्वम्, समुदायस्य च पदात्परत्वे निघातः । *कुण्डेनाटन्निति* । नन्वत्र सति तावत्पराङ्गवद्भावे समुदायस्याद्युदात्तत्वं शेषनिघातश्च, असत्यपि कुण्डशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः, पदात्परमामन्त्रितं निहन्यते१ यदा तर्ह्यटन्नित्येतत्पादादौ वर्त्तते तदा नास्ति निघात इति द्वयोराद्युदात्तत्वं स्यात् । किं च पुंल्लिङ्गोऽपि कुण्डशब्दोऽस्ति—

पत्यौ जीवति कुण्डः स्यान्मृते भर्त्तरि गोलकः । इति ।

कुण्डीति च जानपदादिसूत्रेण ङीषि भवति । *परशुना वृश्चन्निति* । 'आङ्परयोः खनिशृभ्यां डिच्च' इति कुप्रत्ययान्तत्वादन्तोदात्तः परशुशब्दः, मद्रशब्दः 'मदेश्च' इति रक्प्रत्ययान्तः, कश्मीरशब्दो घृतादित्वादन्तोदात्तः, 'सुबन्तस्य पराङ्गवद्भावे तन्निमित्तग्रहणम्' तस्यामन्त्रितवाच्यस्यार्थस्य यन्निमित्तं तदभिधाय्येव सुबन्तं पराङ्गवदित्यर्थः । उदाहरणेषु तृतीयान्तस्य तावन्निमित्तत्वमस्त्येव; षष्ठ्यन्तस्याप्यस्ति, भृत्यनिमित्ता हि राजता, देशनिमित्ता वा । एवं

### न्यासः

सुबामन्त्रिते पराङ्गवत् स्वरे ॥ पराङ्गवदिति । अत्राङ्गशब्दोऽवयववचनः । परस्याङ्गवत् परैकदेशवद्भवति । तद्ग्रहणेन गृह्यत इत्यर्थः । एवं तादात्म्यातिदेशोऽयं विज्ञायत इत्याह—तादात्म्यातिदेशोऽयमिति । तादात्म्यम् = तत्स्वभावत्वम् । सुबन्तमित्यादिना तमेव तादात्म्यातिदेशं स्पष्टीकरोति । सुबन्तमामन्त्रितमनुप्रविशतीति । तत्रान्तर्भवतीत्यर्थः । कुण्डेनाटन्निति । अत्र कुण्डशब्दोकार आमन्त्रितस्वरः । एवमन्यत्रापि ससुप्कस्यामन्त्रितस्य स्वरो वेदितव्यः ।

सुबिति किम् ? पीड्ये पीड्यमान । आमन्त्रित इति किम् ? गेहे गार्ग्यः ।

पदमञ्जरी

गोषु स्वामिन्नित्यत्रापि भवति । तन्निमित्तत्वाभावे तु न भवति—मरुत्वाँ इन्द्र वृषभो रणाय, मरुद्भिरिन्द्र सख्यं ते अस्तु, मायाभिरिन्द्र मायिनम्, एतेनाग्ने ब्रह्मणा वावृधस्व, क्षत्त्रेणाग्ने स्वायुस्सम्भरस्व, मित्रेणाग्ने मित्रधेये यतस्व ।

*सुबिति किमिति* । तन्निमित्तग्रहणादेव तिङन्तस्य सिद्धो निरास इति प्रश्नः । *पीड्ये पीड्यमानेति* । न हि सूत्रकारो वार्त्तिककारवचनेनातिव्याप्तिनिवारणं मन्यत इति भावः । 'पीड अवगाहने' चुरादिणिच्, उभयत्र कर्मणि लट्, एकत्रोत्तमैकवचनमिट्, अपरत्र शानच्, यकि णिलोपः, 'तास्यनुदात्तेत्' इति इटोऽनुदात्तत्वम्, यकः प्रत्ययस्वरः, 'एकादेश उदात्तेनोदात्तः' इत्येकार उदात्तः, पीड्यमानेत्यत्रामन्त्रितनिघातः । ननु च समर्थग्रहणानुवृत्त्यैवात्र न भविष्यति, अस्त्यत्रापि सामर्थ्यम्, कथम् ? सम्बोधनपदं क्रियाया एव विशेषकम्, तथा च—व्रजानि देवदत्तेत्यत्रामन्त्रितनिघातो भवति । उक्तं च—

सम्बोधनपदं यद्यत्तत्क्रियाया विशेषकम् ।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥ इति ।

अथ वा—हेतुहेतुमद्भावलक्षणोऽत्र सम्बन्धः, हे पीड्यमान त्वत्पीडयाहमपि पीड्य इति । *गेहे गार्ग्यं इति* । गेहशब्द उञ्छादित्वादन्तोदात्तः, एकस्यामासना-

न्यासः

**पीड्ये पीड्यमानेति** । हे पीड्यमान त्वदीयया पीडयाहं पीड्ये, बाध्येऽहमित्यर्थः । 'पीड अवगाहने', चुरादिणिच्, उभयत्र कर्मण्यात्मनेपदम्, एकत्रोत्तमपुरुषैकवचनमिट्, अन्यत्र शानच्, सार्वधातुके यक्, णिलोपः, 'तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः' इतीटोऽनुदात्तत्वम्, यक प्रत्ययस्वरेणाद्युदात्तत्वम्, 'एकादेश उदात्तेनोदात्तः' इत्येकार उदात्तः । पीड्यमानेत्यस्य तु 'पीड्य' इत्यस्मात् पदादुत्तरस्य 'आमन्त्रितस्य च' इति निघातः । **गेहे गार्ग्यं इति** । गेहशब्द उञ्छादिपाठादन्तोदात्तः, सप्तम्येकादेशः पूर्ववदुदात्तः, गार्ग्य इति ञित्स्वरेणाद्युदात्तः । पृथक् स्वर एवात्र भवति । **देवदत्त कुण्डेनाटन्निति** । यदि परग्रहणं न क्रियेत तदा देवदत्तशब्दं पूर्वमप्यामन्त्रितं प्रति सुबन्तस्यानुप्रवेशः स्यात्, ततश्च देवदत्तशब्दात् पदात् परस्याटन्नित्येतस्य 'आमन्त्रितस्य च' इति निघातः स्यात् । ननु च परग्रहणे क्रियमाणे कुण्डशब्दस्य पराङ्गवद्भावे सत्याद्युदात्तत्वे षाष्ठिके कृते देवदत्तशब्दात् पदात् परस्याटन्नित्येतस्य निघातेन भवितव्यमेव ? नैतदस्ति; अपादादौ हि स निघातः, पादादित्वञ्चेह विवक्षितम्; तत्र च देवदत्तेत्यामन्त्रितस्वरेणाद्युदात्तः ।

परग्रहणं किम्? पूर्वस्य मा भूत्—देवदत्त कुण्डेनाटन्। अङ्गग्रहणं किम्? यथा मृत्पिण्डीभूतः स्वरं लभेत। उभयोराद्युदात्तत्वं मा भूत्।

**पदमञ्जरी**

दिकायां क्रियायां द्वयोरपि कारकत्वात्तद्द्वारेणास्ति सामर्थ्यम्। *परग्रहणं किमिति*। सन्निधानादामन्त्रितस्यैव भविष्यतीति प्रश्नः। *पूर्वस्य मा भूदिति*। निमित्तभाव एवामन्त्रितस्योपक्षीणतया पूर्वस्यापि स्यादिति भावः। एवं च पूर्वस्यामन्त्रितत्वमतन्त्रम्। गार्ग्यः कुण्डेनाटन्नित्यादावपि भवति सन्निधानात्। आमन्त्रितत्वमपि तन्त्रमिति चेत्; यद्येवम्, परमेव संनिहितमिति न पूर्वं प्रत्यङ्गत्वप्रसङ्गः। देवदत्तः कुण्डेनाटन्नित्यत्र पूर्वं प्रत्यङ्गत्वे सति समुदायस्याद्युदात्तत्वं शेषनिघातः। अटन्नित्यामन्त्रितनिघात इति स्वरः। परग्रहणे तु सति देवदत्तशब्दस्यामन्त्रिताद्युदात्तत्वम्। तथा कुण्डेनाटन्नित्यस्यापि निघातस्तु न भवति; 'आमन्त्रितं पूर्वमविद्यमानवत्' इति देवदत्तशब्दस्याविद्यमानवत्त्वाद्। छन्दसि तु परमपि पूर्वस्याङ्गवदिष्यते—आ ते पितर्मरुतां सुम्नमेतु। पितरित्यनेन सह मरुतामित्यस्यापि निघातः। *यथा मृत्पिण्डीभूत इति*। यथा लभेतेत्यन्वयः। अमृत्पिण्डो मृत्पिण्डः सम्पन्नो मृत्पिण्डीभूतः। तत्र सुबन्तस्य मृत्पिण्डात्मना परिणामासम्भवादेकीभावप्रतिपादनपरमेतत्। मृत्पिण्ड इवेकतामापन्न इत्यर्थः।

यद्वा, पिण्डीशब्दोऽप्यस्ति—प्रविश पिण्डीमिति, तस्यायं प्रयोगः। भूतशब्द उपमार्थः—पितृभूत इति यथा। किमर्थं पुनरेवंभूतस्य स्वरप्राप्तये यत्न इत्यत आह—*उभयोरपीति*। असत्यङ्गग्रहणे कार्यव्यपदेशशास्त्राणामन्यतमातिदेशः स्याद्। यथा परस्य कार्यमामन्त्रितस्य स्वरः आमन्त्रितव्यपदेशः स्वरशास्त्रं वा, तथा सुबन्तस्यापि तद्भवतीति। एवं चोभयोराद्युदात्तत्वं स्यात्। ननु च पदात्परस्य निघातादुभयोरनुदात्तत्वं मा भूदिति वाच्यम्; सत्यम्, आमन्त्रितस्यापा-

**न्यासः**

एवं कुण्डेनाटन्नित्यपि। आमन्त्रितनिघातोऽत्र न भवति; पादादित्वात्! यथा मृत्पिण्डीभूतः स्वरं लभेतेति। कथं नाम सुबन्तसमुदायो मृत्पिण्ड इवैकीभूत एकरूपतामिवापन्नः स्वरं लभेतेत्येवमर्थमङ्गग्रहणम्। किमर्थं पुनरेकीभूतस्य स्वरप्राप्तये यत्नः क्रियत इत्यत आह—उभयोरित्यादि। यद्यङ्गग्रहणं न क्रियेत, ततश्च कार्यातिदेश-शास्त्रातिदेश-व्यपदेशातिदेशानामन्यतमः स्यात्। तथा च सति यथा परस्य कार्यमाद्युदात्तत्वमामन्त्रितव्यपदेश आद्युदात्तशास्त्रं च; तथा सुबन्तस्य पूर्वस्यापि स्यादिति, ततश्चोभयोरप्याद्युदात्तत्वं स्यात्। अङ्गग्रहणे तु सति तादात्म्यातिदेशोऽयं भवति। तेन मृत्पिण्डीभूतः सुबन्तसमुदाय आमन्त्रिताद्युदात्तरूपं स्वरं लभत इति न-

वत्करणं किम्? स्वाश्रयमपि कार्यं यथा स्यात्। आम् कुण्डेनाटन्। 'आम एकान्तरमामन्त्रितमनन्तिके' इत्येकान्तरता भवति। स्वर इति किम्? कूपे सिञ्चन्। चर्म नमन्। षत्वणत्वे प्रति पराङ्गवन्न भवति।

पदमञ्जरी

दादित्वे सति, पादादित्वे तदुक्तम्। *वत्करणं किमिति*। परत्र परशब्दप्रयोगादेव वत्यर्थो लप्स्यत इति प्रश्नः। *स्वाश्रयमपि यथा स्यादिति*। नानेन काचित्कत्वमस्योच्यते। एवं हि विषयविभागो न ज्ञायते—क्वाङ्गवद्भवति? क्व नेति? नापि कादाचित्कत्वम्—कदाचिदङ्गवत्, कदाचिन्नेति, एवं हि सर्वत्र विकल्पः स्यात्। तस्मादयमत्रार्थः—असति वद्ग्रहणे आम् कुण्डेनाटन्निति स्थिते अटन्नित्यस्य निघाते प्राप्ते कुण्डेनेत्यस्यानुप्रवेशात्कुण्डेनाटन्नित्येकमामन्त्रितं सम्पन्नम्। न च तदेकान्तरमिति प्रतिषेधाभावान्निघात एव स्यात्। वत्करणे तु सति अटन्नित्यस्य तावदेकान्तरत्वान्निघातप्रतिषेधे आद्युदात्तत्वं प्राप्तम्। तस्यां दशायां कुण्डेनेत्यस्यानुप्रवेशात्समुदायस्याद्युदात्तत्वं भवति। तदेवं समुदायस्यानेकान्तरत्वेऽपि अटन्नित्यस्य यदेकान्तरत्वं वत्करणेन लब्धं तेनैव समुदायस्य निघातनिवृत्तिराद्युदात्तत्वं च भवति।

*कूपे सिञ्चन्निति*। अत्र पराङ्गवद्भावे सति ऐकपद्यात्षत्वप्रसङ्गः, स्वाश्रयं पदादित्वं भविष्यति, सर्वातिदेशेषु ह्यविरुद्धं स्वाश्रयं भवति। किं च नात्रातिदेशिकं सकारस्य किञ्चिच्छास्त्रीयं कार्यमस्ति, अतोऽपि स्वाश्रयं भवत्येव, यथा—नमते दण्डः स्वयमेवेत्यत्र यक्प्रतिषेधे शप्। इदं तर्हि—'चर्म नमन्', अत्र पराङ्गवद्भावे सति समानपदस्थत्वाण्णत्वं स्यात्। सत्यपि समानपदत्वे 'पूर्वपदा-

न्यासः

भवत्युभयोराद्युदात्तत्वप्रसङ्गः। स्वाश्रयमपि कार्यं यथा स्यात्। आम् कुण्डेनाटन्नित्यत्र अटन्नित्येतस्य 'पदात्परस्यामन्त्रितस्य' इति निघाते प्राप्ते 'न लुट्' इत्यतो नेत्यनुवर्त्तमाने 'आम एकान्तरमामन्त्रितमनन्तिके' इत्यनेन विधीयमानो निघातप्रतिषेधोऽसति वत्करणे न प्राप्नोति; एकान्तरताया अभावात्। परमेव हि स्यात् सुबन्तमसति वत्करणे, न च तथाभूतेनैकान्तरता युक्ता। वत्करणे तु सति, भवति कदाचित् स्वाश्रयमप्यनङ्गत्वमित्युपपद्यत एकान्तरता, तेन निघातप्रतिषेधः सिध्यति। तत्रायं स्वरविभागः—आमित्यस्य निपातस्वरेणाद्युदात्तत्वम्। कुण्डशब्दस्यापि पराङ्गवद्भावे सत्यामन्त्रितस्वरेणाद्युदात्तत्वम्। तथा निघातप्रतिषेधे सत्यटन्नित्येतस्यापि षाष्ठिकेनाद्युदात्तेन भवितव्यम्। कूपे सिञ्चन्निति। अत्र पराङ्गवद्भावो नास्तीति पदादित्वं सकारस्य भवति। तेन 'सात्पदाद्योः' इति षत्वप्रतिषेधः स्यात्। चर्म नमन्निति। अत्रापि पराङ्गवद्भावाभावात् समानपदस्थौ निमित्तनिमित्तिनौ न भवत इति समानपदाश्रयं णत्वं न भवति।

*सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानमननन्तरत्वात् * । तीक्ष्णया सूच्या सीव्यन् । तीक्ष्णेन परशुना वृश्चन् ।

* अव्ययानां प्रतिषेधो वक्तव्यः * । उच्चैरधीयान । नीचैरधीयान ॥

प्राक्कडारात्समासः ॥ ३ ॥

कडारसंशब्दानात्प्राग् यानित उर्ध्वमनुक्रमिष्यामस्ते समास-

पदमञ्जरी

त्संज्ञायामगः' इति नियमादसंज्ञायां न भविष्यति । नायं नियमस्य विषयः, पूर्वपदशब्दो हि समासावयवे रूढः । तेन समास एव नियमः । अथ तु—पूर्वं पदं पूर्वपदं पूर्वपदादित्यविशेषेण नियमो व्याख्यायेत, ततः स्वरग्रहणं शक्यमकर्तुम् । अक्रियमाणे च तस्मिन्, समानाधिकरणस्योपसंख्यानमित्येतदपि शक्यमकर्त्तुम् । कथम्, परस्याङ्गवद्भावे कृते चिणो लुङ्न्यायेन विषयभेदाल्लक्षणस्यावृत्तौ पूर्वस्यापि पराङ्गवद्भावो भविष्यति ॥ सति तु स्वरग्रहणे स्वरादन्यत्र पराङ्गवद्भावे पराङ्गवद्भावो न सिद्ध्यतीति कर्त्तव्यम् । नन्वसति स्वरग्रहणे परशुना वृश्चन्नित्यत्र वृश्चन्निति प्रातिपदिकम्; न च प्रत्ययलक्षणेनाप्रत्यय इति प्रतिषेधः, 'न ङिसंबुद्ध्योः' इति निषेधाल्लिङ्गात्; तत्र पराङ्गवद्भावेन प्रातिपदिकानुप्रवेशात् 'सुपो धातुप्रातिपदिकयोः' इति सुब्लुक् प्रसज्येत; स्वरग्रहणे तु सति सुब्लुकि कर्त्तव्ये पराङ्गवद्भावाभावः ? नैतदस्ति; पराङ्गवदित्यामन्त्रितं संनिधानात्परशब्देन गृह्यते; तस्य रूपस्य सुबन्तैकान्तत्वात्सुबन्तकार्य एव पराङ्गवद्भावः, न प्रातिपदिककार्ये । *उच्चैरधीयानेति* । उच्चैर्नीचैःशब्दौ स्वरादिष्वन्तोदात्तौ पठितौ, अधिकरणशक्तिप्राधान्याच्च तस्मिन्निमित्तं च ॥

*प्राक्कडारात्समासः* ॥ 'यथाऽसादृश्ये' इति अनन्तरसूत्रातिक्रमे न किञ्चित्का-

न्यासः

सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्येत्यादि । किं पुनः कारणं समानाधिकरणस्य न प्राप्नोति, यत इदमुपसंख्यानं क्रियत इत्याह—अनन्तरत्वादिति । 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थत्वाद् व्यवहिते न प्राप्नोतीत्युपसंख्यायते । तीक्ष्णया सूच्या सीव्यन्नित्यत्र सीव्यन्नित्येतस्मिन् परतस्तीक्ष्णयेत्यस्य व्यवहितस्यापि पराङ्गवद्भावादाद्युदात्तत्वं भवति । उच्चैरधीयानेति । उच्चैःशब्दस्य पराङ्गवद्भावाभावादामन्त्रितनिबन्धनमाद्युदात्तत्वं न भवति । तस्मिन्नसति तत्रान्तोदात्तत्वमेव भवति; स्वरादिष्वन्तोदात्तस्य पाठात् । तथा हि तत्रैव सनतर—उच्चैस्-नीचैरित्येवमादीनि पृथक्पर्यन्तान्युपदिश्य 'एते सन्नतरप्रभृतयोऽन्तोदात्ताः पठ्यन्ते' इत्युक्तम् । अधीयानेत्यस्य यदा पादादित्वं विवक्ष्यते तदाऽऽद्युदात्तत्वम्, अन्यत्र 'आमन्त्रितस्य च' इति निघातः ॥

संज्ञा वेदितव्याः । वक्ष्यति—'यथाऽसादृश्ये', यथावृद्धं ब्राह्मणानामन्त्रयस्व । प्राग्वचनं संज्ञासमावेशार्थम् ।

समासप्रदेशाः—'तृतीयासमासे' इत्येवमादयः ॥

पदमञ्जरी

रणम् । ननु 'प्रत्ययः' इत्यादिवत्समास इत्येव स्वरितत्वादधिकारोऽस्तु, किं प्राग्वचनेन ? तत्राह—*प्राग्वचनमिति* । प्राक्कडारादित्यवधिनिर्देश इत्यर्थः । *संज्ञासमावेशार्थमिति* । अन्यथैकसंज्ञाधिकारात्पर्यायः स्यात् । अवधिनिर्देशे तु सति तत्सामर्थ्यात्प्राग्ग्रहणमावर्त्तते । तेन प्राक् समाससंज्ञा भवन्ति, समासाः सन्तोऽव्ययीभावादिसंज्ञा इति समावेशसिद्धिः । अथ वा—कडारादिति पञ्चम्यैव प्रागिति दिक्शब्दोऽध्याहरिष्यते । न च[1] परागित्यस्याध्याहारप्रसङ्गः,तदध्याहारे हि 'दिक्समासे बहुव्रीहौ' 'तृतीयासमासे' 'द्वन्द्वे च' समास इत्याद्यनुपपन्नं स्यात्; कडारात्प्राङ्निर्दिष्टानां समाससंज्ञाया अभावात् । तस्मात्प्रागित्येवाध्याहरिष्यते, नार्थः प्राग्वचनेन, तत्राह—*प्राग्वचनमिति* ॥

न्यासः

**प्राक्कडारात्समासः ॥** यथावृद्धमिति । अत्र समाससंज्ञायां सत्याम् 'कृत्तद्धितसमासाश्च' इत्येवमादि कार्यं भवति । अथ किमर्थं प्राग्वचनम्, यावता पञ्चमीनिर्देशादेव प्रागित्यस्याध्याहारो भविष्यति; न च परागित्ययमपि दिक्छब्दोऽस्ति, अतस्तस्याप्यध्याहारः स्यादित्याशङ्कनीयम्, तदध्याहारे कडारसंशब्दनात् परे येऽनुक्रंस्यन्ते तेषां समाससंज्ञा स्यात्; तथा च कडारसंशब्दनादनन्तरमेव समासाधिकारं कुर्यात्, इह तु कृतः, तस्मादिह करणसामर्थ्यात् समासाधिकारस्य प्रागित्यस्याध्याहारो भविष्यति, ततो नार्थः प्राग्वचनेनेत्याह—**प्राग्वचनमित्यादि** । उत्तरत्राऽव्ययीभावादिसंज्ञाभिः सह समाससंज्ञायाः समावेशो यथा स्यादित्येवमर्थं प्राग्वचनम् । असति तु तस्मिन्, ताभिरनवकाशाभिरियं संज्ञा बाध्येत । अस्यास्तु समाससंज्ञायाः 'सह सुपा' इत्यत्र सहेति योगविभागेन यः समासः क्रियते सोऽवकाशः स्यात्—अनुप्रावर्षत्, अनुव्यचलदिति, तिङन्तेनात्र समासः; असत्यपि सावकाशत्व एकसंज्ञाधिकारे वचनप्रामाण्यात् पर्यायेण वृत्तिः स्यात्, न तु समावेशः । साक्षात् सूत्रेणोपात्ते तु प्राग्वचने सति भवति समावेशः, कथम् ? एवं हि सम्बन्धः क्रियते—कडारात् प्राग् यावन्तो व्यवस्थिताः सर्वे ते समाससंज्ञका भवन्ति, समाससंज्ञकाः सन्तोऽव्ययीभावादिसंज्ञां लभन्त इति । तेन निमित्तमेव समाससंज्ञाऽव्ययीभावादिसंज्ञानाम् । न च निमित्तिना निमित्तं विहन्यते; अन्यथा तस्य निमित्तत्वमेव न स्यादिति युक्तः सूत्रोपात्तेन प्राग्वचनेन समावेशः । अध्याहृते तु तस्मिन् 'कडारसंशब्दनात् प्राग् यावन्तो व्यवस्थिताः सर्वे ते समाससंज्ञका भवन्ति' इत्येषोऽर्थो लभ्यते, न तु 'समास-

१. प्रागिति मुद्रितः पाठोऽसाधुः ।

## सह सुपा ॥ ४ ॥

'सुप्'इति वर्तते, 'सह'इति 'सुपा'इति च त्रयमप्यधिकृतं वेदितव्यम्। यदित ऊर्ध्वमनुक्रमिष्यामस्तत्रेदमुपस्थितं द्रष्टव्यम्। वक्ष्यति— 'द्वितीयाश्रित' इति, द्वितीयान्तं श्रितादिभिः सह समस्यते; कष्टं श्रितः कष्टश्रितः।

### पदमञ्जरी

सह सुपा ॥ सहवचनं किमर्थम्, यावता तृतीयैव सहार्थमाक्षेप्स्यति, यथा— 'वृद्धो यूना' इति ? सहभूतयोः समाससंज्ञा यथा स्याद् एकैकस्य मा भूद्; अन्यथा पुत्रेण सहागतः पितेत्यत्र यथा द्वयोरप्यागमनेन सम्बन्धः, एवं समाससंज्ञापि प्रत्येकमेव स्यात्, सहग्रहणे तु सहभूतयोरेका संज्ञा भवति। किं च स्याद् यद्येकैकस्य संज्ञा स्यात् ? इह ऋक्पाद इति समासान्तः प्रसज्येत, द्वौ च स्वरौ स्याताम्। 'कृत्तद्धितसमासाश्च' इत्यत्र तु समासश्च समासश्चेत्येकशेषो व्याख्यास्यते, तेन समाससमूहस्य संज्ञाविधिर्नियमार्थ इति वाक्यस्य न भविष्यति; अन्यथा त्वेकैकस्य समासस्य प्रत्ययान्तत्वाद्विध्यर्थं समासग्रहणं स्यात्। 'समासाच्च तद्विषयात्' इत्यत्रापि प्रातिपदिकादित्यनुवर्त्तते, समूहस्य च प्रातिपदिकत्वम्, न त्वेकैकस्य समासस्येति समासादित्येकत्वाविवक्षया समूहादेव सिद्धः प्रत्ययः।

तदेवं समुदायस्य यथा स्यादेकैकस्य मा भूदिति सहग्रहणम् ? नैतदस्ति प्रयोजनम्, 'समासः' इति महती संज्ञा क्रियते—अन्वर्थसंज्ञा यथा विज्ञायेत।

### न्यासः

संज्ञकाः सन्तोऽव्ययीभावादिसंज्ञकाः' इत्येषोऽपि। साक्षात् सूत्रोपात्ते तु तस्मिन्नेषोऽपि लभ्यते; अन्यथा तस्य सूत्रे साक्षादुपादानमनर्थकं स्यात् ॥

सह सुपा ॥ सहग्रहणं योगविभागार्थमिति। ननु चासति तस्मिन्नेकैकस्य संज्ञा स्यात्, ततश्च ऋक्पाद इत्यत्र 'ऋक्पूरब्धूःपथामानक्षे' इत्यकारः समासान्तः स्यात्; इह च 'राजाश्वः' इत्यत्र 'समासस्य' इति द्वौ स्वरौ स्याताम्, तस्मात् सहभूतयोरेव समाससंज्ञा यथा स्यादेकैकस्य मा भूदित्येवमर्थं सहग्रहणं कस्मान्न विज्ञायते ? एवं मन्यते—सुपेति तृतीयैव सहार्थं गमयति, यथा 'वृद्धो यूना' इति। 'समास' इति च महती संज्ञा क्रियते—अन्वर्थसंज्ञा यथा विज्ञायेतेति। कथं नामान्वर्थसंज्ञा क्रियते ? समसनम्=समासः, संक्षेप इत्यर्थः। संक्षेपश्चानेकवस्तुविषयः। तेनासत्यपि सहेत्यस्मिन् सहभूतयोरेव समाससंज्ञा भविष्यति। न प्रत्येकमिति। अनुव्यचलदिति। तिङन्तेनात्र समासः। अत्र 'तिङ्ङतिङः' इति निघाते कृते समाससंज्ञायां सत्यां तन्निबन्धनमन्तोदात्तत्वं भवति ॥

सहग्रहणं योगविभागार्थम्, तिङापि सह यथा स्यात्—अनुव्यचलत्, अनुप्रावर्षत् ॥

अव्ययीभावः ॥ ५ ॥

'अव्ययोभावः' इत्यधिकारो वेदितव्यः। यानित उर्ध्वमनुक्रमिष्यामोऽव्ययीभावसंज्ञास्ते वेदितव्याः। वक्ष्यति—'यथाऽसादृश्ये', यथावृद्धं ब्राह्मणानामन्त्रयस्व ।

अन्वर्थसंज्ञा चेयं महती पूर्वपदार्थप्राधान्यमव्ययीभावस्य[1] दर्शयति ।

पदमञ्जरी

यस्मिन्समुदाये पदद्वयं परस्परं समस्यते स समासः। 'हलश्च' इत्यधिकरणे घञ्। तस्मादनर्थकं सहग्रहणम् तत्राह—*सहग्रहणं योगविभागार्थमिति*। सहेत्येको योगः, सुबित्येव, सुप् सह समस्यते, केन ? पदविधित्वात्समर्थेन। *अनुव्यचलदिति*। तत्र सुबित्येकत्वस्य विवक्षितत्वाद्वेः पूर्वं समासः, पश्चादनोः, तत्र नित्यसमासत्वाद्वेः शाकलाभावः। समासान्तोदात्तत्वं तु न भवति; 'तिङ्ङतिङः' इति निघातात्। अनोः 'गतिर्गतौ' इति निघातः, वेर्यणादेशे 'उदात्तस्वरितयोः' इत्यटः स्वरितत्वम्। अन्ये तु—सतिशिष्टं समासान्तोदात्तत्वं भवतीत्याहुः। विभक्तिस्तु सत्यपि समासत्वेन प्रातिपदिकत्वे न भवति; तिङेकत्वस्योक्तत्वात्। यद्वा—वचनग्रहणमुक्तेष्वप्येकत्वादिषु यथा स्यादिति प्रथमैकवचनम्, हल्ङ्यादिलोपः। एवं चैकपद्यादामनुव्यचलद्देवदत्तेति 'आम एकान्तरमामन्त्रितमनन्तिके' इति निघातप्रतिषेधो भवति। योगविभागश्चेष्टसिद्ध्यर्थ इत्यतिप्रसङ्गो नोद्भावनीयः॥

*अव्ययीभावः* ॥ इह लघ्वर्थं संज्ञाकरणमित्येकाक्षरा संज्ञा कार्या, किमर्थं महती क्रियते इत्याह—*अन्वर्थसंज्ञा चेयमिति*। अनव्ययमव्ययं भवतीत्यव्ययीभावः, 'भवतेर्ण उपसंख्यानम्' इति णप्रत्ययः। अन्वर्थत्वे किं सिध्यतीत्यत आह—*तेनेति*। पूर्वपदग्रहणमव्ययस्योपलक्षणार्थम्। सूपप्रति, शाकप्रतीत्यादावुत्तरपदार्थ-

न्यासः

**अव्ययीभावः** ॥ यथावृद्धमित्यत्राव्ययीभावत्वे सति 'अव्ययीभावश्च' इति नपुंसकत्वे 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्येष विधिर्भवति। **अन्वर्थसंज्ञा चेयमिति**। अनव्ययमव्ययं भवतीत्यव्ययीभावः। पूर्वपदार्थप्राधान्यमित्यादिना अन्वर्थसंज्ञायाः फलमाह। प्रायेण ह्यव्ययीभावे पूर्वपदमव्ययम्, परपदमनव्ययम्; समुदायो नाव्ययम्। स यदि पूर्वपदवशेन तस्य पूर्वपदस्य यो धर्मोऽव्ययत्वं तत् प्रतिपद्यते ततोऽनव्ययस्वभावः सन्नव्ययस्वभावो भवति। एवञ्च पूर्वपदवशेन तद्धर्मं प्रतिपद्यते यदि पूर्वपदं प्रधानं भवति, नान्यथा। प्रधानवशेन हि वस्तुनः स्वधर्मपरित्यागेन धर्मान्तरापत्तिर्युक्ता।

१. अव्ययीभावाधिकारविहितत्वं तत्त्वमिति तु निष्कर्षः। एवं तत्पुरुषादिष्वपि।

अव्ययीभावप्रदेशाः—'अव्ययीभावश्च' इत्येवमादयः ॥

**अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ॥ ६ ॥**

सुप्' 'सुपा' इति च वर्तते। विभक्त्यादिष्वर्थेषु यदव्ययं वर्तते तत्समर्थेन सुबन्तेन सह समस्यते, अव्ययीभावश्च समासो भवति। वचनग्रहणं प्रत्येकमभिसम्बध्यते।

**पदमञ्जरी**

प्राधान्यान्न स्यात्तस्मादव्ययीभावेऽव्ययार्थः प्रधानमिति सूच्यते। एवं ह्यव्ययानव्ययसमुदायोऽव्ययधर्मलाभादव्ययं भवतीति। किं सिद्धं भवति? समृद्धा मद्राः सुमद्रा इत्यादावुत्तरपदार्थप्राधान्येऽव्ययीभावस्यातिप्रसङ्गः परिहृतो भवति। पारेगङ्गम्, द्विमुनि, उन्मत्तगङ्गमित्यादौ च वचनादव्ययीभावः। एवं चानव्ययमव्ययं भवतीत्यन्वर्थतयैवाव्ययकार्यस्यापि लाभाद् 'अव्ययीभावश्च' इत्येतदपि न वक्तव्यम्। 'लुङ्मुखस्वरोपचाराः प्रयोजनमिति परिगणनं वक्ष्यामि' इत्येवमर्थं तदिति चेत्, न; अत्रैव परिगणय्यान्वर्थत्वेन वा विशिष्टकार्यविषयमव्ययत्वमनुमीयताम् ॥

*अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु* ॥ श्रुतत्वादव्ययस्यैव विभक्त्यादयो विशेषणानि, न समासस्येत्याह—*विभक्त्यादिष्विति*। *समस्यत इति*। यद्यपि 'समास' इति संज्ञामात्रं विधीयते, तथाप्ययमबुधबोधनाय भिन्नयोः शब्दयोः संश्लेषः प्रक्रियायां क्रियत इति 'समस्यते' इत्युक्तम्। *वचनग्रहणं प्रत्येकमभिसम्बध्यत इति*। तच्च कर्मसाधनं विभक्त्यादिभिः समानाधिकरणम्। विभक्त्यादिषु वाच्येषु यदव्ययं वर्त्तते=विभक्त्यादीनर्थान्यदव्ययं वक्ति, द्योतयतीत्यर्थः। विभ-

**न्यासः**

तथा हि—प्रधाने राजनि हसति तद्भृत्या अपि हसन्ति, तस्मिन् रुदति तेऽपि रुदन्ति; न त्वप्रधाने चेटीपुत्रादौ। तदेवमन्वर्थसंज्ञेयं भवन्ती पूर्वपदार्थप्राधान्यमव्ययीभावस्य दर्शयति। तेन यदा पूर्वपदार्थस्य प्राधान्यं भवति तदाव्ययीभावो भवति, नान्यथेत्युक्तं भवति ॥

**अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु ॥** स्त्रीष्वधिकृत्य कथा प्रवर्त्ततेऽधिस्त्रीति। 'अनभिहिते' इति सूत्रे 'तिङ्कृत्तद्धितसमासैः परिसंख्यानम्' इति परिगणनं कृतम्, तेनाधिशब्देन द्योतिते सप्तम्यर्थे स्त्रीशब्दात् सप्तमी भवति। तेन तदन्त एव समस्यते। अधिशब्दस्तु प्रथमान्तः। 'अव्ययीभावश्च' इति नपुंसकत्वम्। 'ह्रस्वो

विभक्तिवचने तावत्—स्त्रीष्वधिकृत्य कथा प्रवर्त्यते अधिस्त्रि। अधिकुमारि। सप्तम्यर्थे यदव्ययं तद् विभक्तिवचनम्।

समीपवचने—कुम्भस्य समीपम् उपकुम्भम्। उपमणिकम्।

समृद्धिः=ऋद्धेराधिक्यम्। समृद्धिर्मद्राणाम् सुमद्रम्, सुमगधं वर्तते।

व्यृद्धिः=ऋद्धेरभावः। गवदिकानामृद्धेरभावः दुर्गवदिकम्[1], दुर्यवनं वर्तते।

**पदमञ्जरी**

क्तिशब्देन कारकशक्तिरभिधीयते—विभज्यतेऽनया प्रातिपदिकार्थ इति कृत्वा। *स्त्रीष्वधिकृत्येति*। स्त्रीषु कथा प्रवर्त्यत इत्यन्वयः। अधिकृत्येति, प्रस्तुत्येत्यर्थः। संनिधानाच्च स्त्रिय एव प्रस्तुत्येति गम्यते, स्त्रीविषया कथा प्रवर्त्यत इत्यर्थः। प्रायेण तु *प्रवर्त्तते इति* पाठः। तत्र भिन्नकर्तृकत्वात्क्त्वाप्रत्ययस्यानुपपत्तिः, पुरुषाः प्रस्तुवन्ति कथा प्रवर्त्तत इति। अत्राहुः—अधिकृत्य या कथा सा स्त्रीषु प्रवर्त्तत इत्यर्थः, तत्र प्रस्तावने कथने च कर्तुरेकत्वात्सिद्धः क्त्वाप्रत्यय इति। अन्ये त्वाहुः—कृत्यस्य कथा कर्तव्यकथेत्यर्थः, सा स्त्रीषु अधिप्रवर्तते स्त्रीष्वधीति च प्रक्रियावाक्यम्, न त्वेतत्प्रयोगार्हम्; समासस्य नित्यत्वात्। *अधिस्त्रीति*। 'अव्ययीभावश्च' इति नपुंसकत्वाद् 'ह्रस्वो नपुंसके' इति ह्रस्वः। *सप्तम्यर्थे यदव्ययमिति* विभक्तिवचनतां दर्शयति। *उपकुम्भमिति*। कुम्भस्योपेति प्रक्रियावाक्यं षष्ठ्यन्तेन समासः। *दुःशकम्, दुर्यवनमिति*। मनुष्यजातिवचनौ शकयवनशब्दौ

**न्यासः**

नपुंसके' इति ह्रस्वः। विभक्तिशब्देनेह कारकमुच्यते–विभज्यते प्रातिपदिकार्थोऽनयेति कृत्वा। तच्चेहाधिकरणं विवक्षितमित्याह—सप्तम्यर्थे यदव्ययमिति।

उपकुम्भमिति। समीपार्थेनोपशब्देनोपजनिते व्यतिरेके कुम्भशब्दात् षष्ठी भवतीति षष्ठ्यन्त एव समस्यते।

सुमद्रमिति। यदा मद्रैर्विशिष्यमाणत्वात् समृद्धेः प्राधान्यं भवति तदायं समासः। मद्राणामाधिक्येन ऋद्धिर्वर्त्तत इत्यर्थः। यदा तु मद्राः समृद्ध्या विशिष्यमाणाः प्रधानभावमनुभवन्ति तदा 'कुगतिप्रादयः' इति तत्पुरुषो भवति—सुमद्रा इति। समृद्धिमन्तो मद्रा इत्यर्थः।

दुर्गवदिकमिति। गवदिकानामृद्धिविगमो वर्त्तत इत्यर्थः। ननु चार्थाभाव इत्यनेनैव तत्सिद्धम्, तथा ह्यर्थाभावो वस्त्वभावः, ऋद्धिविगमोऽपि वस्त्वभावो भवत्येव,

१. शकानाम् व्यृद्धिः दुश्शकमिति पदमञ्जरीसम्मतः पाठोऽत्र स्थाने।

अर्थाभावः = वस्तुनोऽभावः। अभावो मक्षिकाणाम् निर्मक्षिकम्, निर्मशकं वर्तते।

अत्ययः = अभूतत्वम्, अतिक्रमः। अतीतानि हिमानि निर्हिमम्, अतिशीतं वर्तते।

असंप्रति = उपभोगस्य वर्तमानकालप्रतिषेधः। अतितैसृकम्। तैसृकम् = आच्छादनम्, तस्यायमुपभोगकालो न भवतीत्यर्थः।

पदमञ्जरी

किमर्थं पुनर्वृद्धिग्रहणम्, अर्थाभाव इत्येव सिद्धम्? न सिद्ध्यति; येन समस्यते तदर्थस्याभावोऽर्थाभावः, न चात्र शकानामभावः, किं तर्हि? तदीयाया ऋद्धेः। अर्थाभाव इत्यर्थग्रहणं यत्र धर्मिस्वरूपस्यैवाभावस्तत्र यथा स्यात्, धर्ममात्रप्रतिषेधे मा भूत्, तद्यथा—ब्राह्मणेन ब्राह्मण्यामुत्पादितत्वेन कस्यचिद्ब्राह्मणत्वं प्रसज्य प्रतिषेधति—नायं ब्राह्मणो यस्तिष्ठन्मूत्रयति। इतरेतराभावे च मा भूत्—गौरश्वो न भवतीति; अत्रापि वस्त्वन्तरं प्रतिषिध्यते, न धर्मिस्वरूपम्। अतिशीतमिति। अर्थाभावः कालानवच्छिन्नोऽभाव आश्रीयते, इह तु संप्रत्यभाव इत्यत्ययस्य भेदेनोपादानम्।

*अतितैसृकमिति*। तिसृका नाम ग्रामः, 'तिसृभावे संज्ञायां कन्युपसङ्ख्यानम्'

न्यासः

तत्कोऽत्र विशेषो येनार्थाभावाद् ऋद्धिविगमस्य पृथगभिधानं क्रियते? अयमस्ति विशेषः; उत्तरपदार्थाभावो हि द्रव्याभावः, यथा—निर्मक्षिकमिति, मक्षिकाणामभाव उच्यते; न तु दुर्गवदिकमित्यत्र गवदिकानामभावः, किं तर्हि? तदीयाया ऋद्धेर्विगमः।

अर्थाभाव इति। अथार्थग्रहणं किमर्थम्? धर्माभावे प्रसज्यप्रतिषेधो मा भूत्, यथा—न भवति ब्राह्मणोऽब्राह्मण इति। ब्राह्मणत्वं धर्मोऽत्र प्रतिषिध्यते, न तु वस्त्वभावः। किञ्च—इतरेतराभावे च मा भूत्, गौरश्वो न भवतीति। अत्राप्यर्थान्तरत्वं प्रतिषिध्यते, न तु वस्त्वभावः।

अत्ययोऽभूतत्वमिति। अस्यैव पर्यायोऽतिक्रमः। अतिक्रमः इत्युत्पत्त्यभावः, प्रध्वंसाभाव इत्यर्थः। अर्थाभावस्तु क्वचिद्देशे सर्वदैव वस्तुनोऽभावः, न तूत्पन्नस्य पश्चादभाव इत्यत्ययोऽर्थाभावाद् भिद्यते।

उपभोगस्येत्यादिनाऽर्थाभावाद् भेदं दर्शयति। अर्थाभावो हि क्वचिद्देशे कालत्रयेऽप्यभावः, असम्प्रति पुनरुपभोगस्य यो वर्त्तमानः कालस्तस्यैव प्रतिषेध इति भिद्यते; असंप्रत्यर्थाभावात्। अतितैसृकमिति। तिसृका नाम ग्रामः 'तत्र भवः' 'तत आगतः'

शब्दप्रादुर्भावः = प्रकाशता शब्दस्य । इतिपाणिनि । तत्पाणिनि । पाणिनिशब्दो लोके प्रकाशत इत्यर्थः ।

पश्चात्—अनुरथं पादातम् । रथानां पश्चात् । यथार्थे यदव्ययं वर्तते तत्समस्यते ।

योग्यता, वीप्सा, पदार्थानतिवृत्तिः, सादृश्यं चेति यथार्थाः । योग्यतायाम्—अनुरूपम् । रूपयोग्यं भवतीत्यर्थः । वीप्सायाम्—अर्थमर्थं प्रति प्रत्यर्थम् । पदार्थानतिवृत्तौ—यथाशक्ति ।

आनुपूर्व्यम् = अनुक्रमः । अनुज्येष्ठं प्रविशन्तु भवन्तः । ज्येष्ठानुपूर्व्येण भवन्तः प्रविशन्त्वित्यर्थः ।

**पदमञ्जरी**

तत्र भवं तैसृकम्=आच्छादनम् । तच्च कालविशेष उपभोग्यम् उष्णे शीते वा। अतिशब्दो नेदानीमित्यस्यार्थे वर्तते । उपभोगक्रिया च वृत्तौ स्वभावादेवान्तर्भवति, यथा—दध्युपसिक्त ओदनो दध्योदन इति । तद्द्वारेण पूर्वोत्तरपदयोः सामर्थ्यम्, नेदानीमुपभोगार्हं तैसृकमाच्छादनमित्यर्थः । आच्छादनापेक्षस्यापि तैसृकशब्दस्य गमकत्वात्समासः । नात्र तैसृकस्य कालानवच्छिन्नो भावः, नापि संप्रति तस्याभावः, किं तर्हि ? तदुपभोगस्येत्यर्थाभावादत्ययाच्चासंप्रतिभिद्यते । *तत्पाणिनीति* । तच्छब्दो निपातोऽप्यस्ति ।

*प्रत्यर्थमिति* । अर्थमर्थं प्रतीति वाक्यमप्यत्र भवति; भाष्यप्रयोगात् । यदि वा नात्राव्ययं वीप्सावृत्ति, किं तर्हि ? कर्मप्रवचनीयत्वात्सम्बन्धमवच्छिनत्ति । वीप्सा तु द्विर्वचनद्योत्या । अनुपूर्वस्य भाव आनुपूर्व्यम्—ब्राह्मणादित्वात्ष्यञ्, ष्यञः षित्करणात्स्त्रियामपि भवति तस्य प्रयोगः । एवं *ज्येष्ठानुपूर्व्येणेति* ।

**न्यासः**

इति वाऽण्, तैसृकम्, न तैसृकस्य वर्त्तमानः काल उपभोगस्येत्यर्थेऽतितैसृकमिति भवति ।

**अनुरूपमित्यत्र** योग्यतायामनुशब्दः । योग्यं रूपं वहतीत्यर्थः । **प्रत्यर्थमिति** । प्रतिशब्दोऽव्ययमत्र वीप्सायाम्, अर्थमर्थंप्रति प्रत्यर्थम् । ननु चात्र नित्यसमासत्वात् वाक्येन न भवितव्यम् ? नैतदस्ति; प्रतिशब्दस्य वीप्सायामर्थे कर्मप्रवचनीयसंज्ञा विहिता, तद्योगे द्वितीया यथा स्यादित्येवमर्थम् । तस्याश्च वाक्य एव प्रयोगो नान्यत्रेति तेन सत्यपि नित्यसमासत्वे वाक्यमपि भवति । **यथाशक्तीति** । पदार्थानतिवृत्तौ यथाशब्दः । पदमत्र शक्तिशब्दस्तस्यार्थः शक्तिरेव, तस्या अनतिवृत्तिरन-

यौगपद्यम् = एककालता । सचक्रं धेहि । युगपच्चक्रं धेहीत्यर्थः ।

सादृश्यम् = तुल्यता । किमर्थमिदमुच्यते, यथार्थ इत्येव सिद्धम् ? गुणभूतेऽपि सादृश्ये यथा स्यात्—सदृशः किख्या सकिखि ।

संपत्तिः = अनुरूप आत्मभावः, समृद्धेरन्यः । सब्रह्म बाभ्रवाणाम् । सक्षत्रं शालङ्कायनानाम् ।

साकल्यम् = अशेषता । सतृणमभ्यवहरति, सबुसम् । न किञ्चिदभ्यवहार्यं परित्यजतीत्ययमर्थोऽधिकार्थवचनेन प्रतिपाद्यते ।

**पदमञ्जरी**

*सचक्रमिति* । सहशब्दस्य समासः, 'अव्ययीभावे चाकाले' इति सभावः, एवमुत्तरेष्वप्युदाहरणेषु । *गुणभूतेऽपीत्यादि* । यदि 'सादृश्ये' इति नोच्यते, पूर्वपदार्थप्रधानोऽव्ययीभाव इति यदा सादृश्यं विशेष्यत्वात्प्रधानं तदैव स्यात्—सादृश्यं किख्येति, गुणभूते न स्यात् । *सदृशः किख्येति* । सादृश्यवतः प्राधान्यदर्शनेन सादृश्यस्य गुणभावं दर्शयति । *सकिखीति* । पूर्ववद्ध्रस्वः । अपचितपरिमाणः शृगालः किखी । अप्रसिद्धोदाहृणम्; चिरन्तनप्रयोगात् ।

सम्पत्तिशब्दस्य समृद्धौ रूढत्वात्पुनरुपादानं व्यर्थमित्याशङ्क्याह—*सम्पत्तिरनुरूप आत्मभाव इति* । *सब्रह्म बाभ्रवाणामिति* । तेषामनुरूपो ब्रह्मभाव इत्यर्थः ।

*सतृणमिति* । न चात्र तृणभक्षणं वास्तवमित्याह—*न किञ्चिदिति* । तृणभक्ष-

**न्यासः**

तिक्रमः । यथाशक्ति करोतीति शक्त्यनतिक्रमेण करोतीत्यर्थः । ज्येष्ठानुपूर्व्येणेति । ज्येष्ठानुक्रमेणेत्यर्थः ।

सचक्रमिति । 'अव्ययीभावे चाकाले' इति सहशब्दस्य सभावः । एवं सकिखीत्यादावपि सभावो वेदितव्यः ।

गुणभूतेऽपीत्यादि । यदि सादृश्य इति नोच्येत तदा पूर्वपदार्थप्रधानोऽव्ययीभाव इति यदा सादृश्यं विशेष्यत्वात् प्रधानं भवति तदैव स्यात्, सादृश्यं किख्याः सकिखीति गुणभूते तु न स्यात्, अस्माद् वचनाद् भवति । सदृशः किख्येति । सादृश्यवतः प्राधान्यप्रदर्शनेन सादृश्यस्य गुणभावं प्रदर्शयितुं सदृशः किख्या इत्युक्तम् । सादृश्यप्राधान्ये विवक्षिते हि सादृश्यमिति भावप्रत्ययेन युक्तो निर्देशः स्यात् । सकिखीति । पूर्ववद् ह्रस्वः ।

ननु च सम्पत्तिः समृद्धिरेव, तत् कथं पृथगुच्यत इत्यत आह—सम्पत्तिरनुरूपमित्यादि । सब्रह्म बाभ्रवाणामिति । तेषामनुरूप आत्मभाव इत्यर्थः । अधिकार्थवचनेनेति । तृणानामभ्यवहारोऽधिकार्थस्तद्वचनेन । न किञ्चिदित्यादिना वाक्येनाधिकार्थता

अन्तवचने—'अन्त' इति परिग्रहापेक्षया समाप्तिरुच्यते। साग्न्यधीते। सेष्टि पशुबन्धम्। पशुबन्धान्तमधीत इत्यर्थः। इयं समाप्तिरसकलेऽप्यध्ययने भवतीति साकल्यात्पृथगुच्यते ॥

## यथाऽसादृश्ये ॥ ७ ॥

'यथा' इत्येतदव्ययमसादृश्ये वर्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति। यथावृद्धं ब्राह्मणानामन्त्रयस्व। ये ये वृद्धाः यथावृद्धम्। यथाध्यापकम्।

असादृश्ये इति किम्? यथा देवदत्तस्तथा यज्ञदत्तः। यथार्थे

### पदमञ्जरी

णमधिकोऽर्थः, तद्वचनेन किंचिदभ्यवहार्यं न परित्यजतीत्ययमर्थः प्रतिपद्यते—तृणानि भक्षयन्कथमन्यत्परित्यजेदिति।

*परिग्रहापेक्षयेति*। 'इदानीमेतावान्प्रदेशोऽध्येतव्यः' इति यावतः प्रदेशस्य परिग्रहस्तदपेक्षया समाप्तिः = अन्तः, स चासकलेऽप्यध्ययने भवतीति भावः। *साग्नीति*। अग्न्यादयः शब्दास्तदर्थे ग्रन्था वर्त्तन्ते, तदानीं परिगृहीतस्य प्रदेशस्याग्न्यादिरन्तः, न तु ततः परेणाध्ययनं नास्ति; ततश्च न साकल्यमित्याह—*इयमिति* ॥

*यथाऽसादृश्ये* ॥ सादृश्ये समासस्य पूर्वेणैव सिद्धत्वादसंदेहार्थं सादृश्ये यथेत्यवचनाच्च नञोऽत्र प्रश्लेषः।

*असादृश्ये इति किमिति*। सूत्रं किमर्थमित्यर्थः। *यथा देवदत्त इति*। देव-

### न्यासः

दर्शयति। यो हि तृणान्यभ्यवहरति स कथमन्यदभ्यवहार्य्यं परित्यजति!

ननु चान्तशब्दः परिसमाप्तौ वर्त्तते, तत्र च साकल्यमस्त्येव, तत् कथमन्तवचनं साकल्यात्पृथगुच्यत इत्यत आह—**अन्तशब्द इत्यादि**। यावतोऽध्ययनस्य परिग्रहः—एतावन्मयाध्येतव्यमिति—तदपेक्षया या समाप्तिः सोऽन्तः, स चासाकल्येऽप्यध्ययनस्य भवतीति साकल्यात् पृथगुच्यते। **साग्न्यधीत इति**। अग्निपर्यन्तमधीत इत्यर्थः। अग्न्यर्थो ग्रन्थस्तादर्थ्यादग्निशब्देनोच्यते। यावतोऽध्ययनस्य परिग्रहस्तस्याग्निरन्तः, न तु ततः परेणाध्ययनमेव नास्तीति। तत्तु नाधीयत इत्यसाकल्यमत्रेत्याह—**इयमित्यादि**। सुबोधम् ॥

**यथाऽसादृश्ये** ॥ ये ये वृद्धा इत्यनेन यथावृद्धमित्यत्र यथाशब्दो वीप्सायां वर्त्तत इत्याचष्टे। **यथा देवदत्तस्तथा यज्ञदत्त इति**। देवदत्तसदृशो यज्ञदत्त इत्यर्थः। ननु

यदव्ययमिति पूर्वेणैव सिद्धे समासे वचनमिदं सादृश्यप्रतिषेधार्थम् ॥

यावदवधारणे ॥ ८ ॥

'यावत्' इत्येतदव्ययमवधारणे वर्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति। अवधारणम्=इयत्तापरिच्छेदः। यावदमत्रं ब्राह्मणानामन्त्रयस्व। यावन्ति पात्राणि संभवन्ति, पञ्च षड् वा, तावत आमन्त्रयस्व।

अवधारण इति किम्? यावद्दत्तं तावद्भुक्तम्। नावधारयामि कियन्मया भुक्तमिति ॥

सुप्प्रतिना मात्रार्थे ॥ ९ ॥

मात्रा, बिन्दुः, स्तोकम्, अल्पमिति पर्यायाः। मात्रार्थे वर्तमानेन

पदमञ्जरी

दत्तस्य यज्ञदत्तं प्रत्युपमानत्वं यथाशब्दो द्योतयति। तत्रोपमानस्योपमेयापेक्षत्वेऽपि यथा-देवदत्तशब्दयोः सामर्थ्यात्परस्परेण समासप्रसङ्ग इति भावः। अथ पूर्वेणात्र सादृश्य इति वा, यथार्थ इति वा कस्मान्न भवतीत्याह —*पूर्वेणैवेति* ॥

*यावदवधारणे* ॥ *यावन्ति पात्राणीति*। यावदित्यव्ययं चास्ति, तद्धितान्तं च विद्यते, अतो नित्यसमासेऽपि तद्धितान्तेन विग्रहः।

*सुप्प्रतिना मात्रार्थे* ॥ *अस्त्यत्र किंचित्सूप* इति किञ्चिदित्यव्ययं सूप इति पुंल्लिङ्गेन समानाधिकरणम्।

न्यासः

न्च यथाशब्दोऽयमुपमानम् 'यज्ञदत्त' इत्युपमेयमपेक्षते। तत्र 'सापेक्षमसमर्थं भवति' इत्यसामर्थ्यादेव समासो न भविष्यति, तत् किमर्थमसादृश्य इति प्रतिषेधेन? नैतदस्ति; न ह्यत्र यथाशब्द उपमानम्, किं तर्हि? 'यथा देवदत्तः' इत्येष समुदायः। तस्मात् तस्यैवोपमेयापेक्षयाऽसामर्थ्यम्, न तु यथाशब्दस्य ॥

**यावदवधारणे** ॥ **इयत्तापरिच्छेद इति**। इयतो भाव इयत्ता=परिमाणम्, तस्याः परिच्छेदो निश्चयः। यावन्ति पात्राणीत्यादिना तमेवेयत्तापरिच्छेदं विस्पष्टीकरोति। नावधारयामीत्यादिना इयत्तापरिच्छेदाभावं दर्शयति ॥

**सुप्प्रतिना मात्रार्थे** ॥ वृक्षं प्रतीत्यत्र लक्षणे प्रतिशब्दो वर्त्तते, न मात्रार्थे। ननु परं सुब्ग्रहणं किमर्थम्, यावता 'सुबामन्त्रिते' इत्यतः सुब्ग्रहणमनुवर्त्तिष्यत इत्यत आह—**सुब्ग्रहणमित्यादि**। सुब्ग्रहणं पूर्वं ह्यव्ययेन सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। तस्मादव्ययनिवृत्त्यर्थमिदमन्यत् सुब्ग्रहणं क्रियते ॥

प्रतिना सह सुबन्तं समस्यते, अव्ययीभावश्च समासो भवति। अस्त्यत्र किञ्चित् शाकं शाकप्रति। सूपप्रति।

मात्रार्थं इति किम्? वृक्षं प्रति विद्योतते विद्युत्।

सुबिति वर्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थम्।

अक्षशलाकासङ्ख्याः परिणा ॥ १० ॥

अक्षशब्दः, शलाकाशब्दः, संख्याशब्दाश्च परिणा सह समस्यन्ते, अव्ययीभावश्च समासो भवति। कितवव्यवहारे समासोऽयमिष्यते। पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति। तत्र यदा सर्वे उत्तानाः पतन्ति, अवाञ्चो वा तदा पातयिता जयति, तस्यैवैतस्य विपातोऽन्यथा पाते सति जायते। अक्षेणेदं न तथा वृत्तं यथा पूर्वं

पदमञ्जरी

*सुबिति वर्त्तमान इति*। 'सुबामन्त्रिते' इत्यतः। *अव्ययनिवृत्त्यर्थमिति*। पूर्वं हि सुब्ग्रहणमव्ययग्रहणेन सम्बद्धम्, तथा च पूर्वसूत्रेऽव्ययस्यैव ग्रहणादनव्ययेन सह विग्रहः कृतः। स्वरादीनां च दोषामन्यमहः, दिवामन्या रात्रिरिति वृत्तिविषये सत्त्वप्रधानतादर्शनान्मात्रावति वृत्तिरविरुद्धेत्यव्ययस्यैव समासः स्यात्॥

*अक्षशलाकासङ्ख्याः परिणा* ॥ *अक्षशलाकासङ्ख्याशब्दा इति*। अक्षशलाकाशब्दौ सङ्ख्यावाचिनश्च शब्दा इत्यर्थः। कश्चित्तु—*अक्षशब्दः शलाकाशब्दः सङ्ख्याशब्दाश्चेति* पाठः। *कितवव्यवहार इति*। कितवाः=द्यूतकाराः, तेषां व्यवहारेऽक्षशलाकानां पातनं तत्रैवायं समास इष्यते, एतच्चाभिधानस्वाभाव्याल्लभ्यते। *सर्वे उत्ताना इति*। शलाकानामपि प्रकृतत्वात्सर्वे च सर्वाश्च सर्वे, उत्तानाश्च उत्तानाश्च उत्तानाः, अवाञ्चश्चावाच्यश्चावाञ्चः, 'पुमान्स्त्रिया' इति पुंसः शेषः। *तस्यैवास्येति*। पातयितुरित्यर्थः। विपातः = पराजयः। अन्यथापाते सति, जये यादृशः पातः सर्वे उत्तानाः पतन्त्यवाञ्चो वेति ततोऽन्यादृशेषु केषुचिदुत्ता-

न्यासः

अक्षशलाकासंख्याः परिणा ॥ कितवव्यवहार इत्यादि। कथं पुनः कितवव्यवहार इष्यमाणोऽपि तत्र लभ्यते? स्वभावत एव; समासस्य तत्र वृत्तेः। न ह्यर्था अतिदिश्यन्ते, लौकिकत्वात् तेषाम्। तस्येत्यादि। तस्य पातयितुस्तस्य च विघात इत्यनेन सम्बन्धः। विपातः = पराजयः। एतस्येति। अक्षादेरेव प्रत्यवमर्शः। अभेदविवक्षायामेकवचनम्। एतस्यान्यथा प्रात इत्यनेन सम्बन्धः। अन्यथेति। जये य उक्तः

जये---अक्षपरि, शलाकापरि; एकपरि, द्विपरि, त्रिपरि। परेण चतुष्परि।

पञ्चसु त्वेकरूपासु[1] जय एव भविष्यति।
अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत्।
कितवव्यवहारे च एकत्वेऽक्षशलाकयोः॥

पदमञ्जरी

नेषु, केषुचिदवाक्षु पतत्स्वित्यर्थः। *अक्षेणेति*। वृत्तापेक्षया कर्त्तरि तृतीया। परेणिति। अतिशयेनातः परमित्यर्थः। पञ्चपरीति न भवतीति यावत्।

अस्योपपादनं श्लोकेन क्रियते। *पञ्चसु त्वेकरूपेष्विति*। अत्रापि पुंसः शेषः। एकरूपास्विति प्रायेण पाठः। तत्र शलाकानामेव ग्रहणम्। *जय एव भविष्यतीति*। लृटोऽर्थो मृग्यः; यतः पञ्चस्वेकरूपेषु जय एव भवति, तेन परमेण चतुः-परीत्यन्वयः।

*अक्षादयस्तृतीयान्ता इति*। अन्यथा वृत्तावयं समास इष्यते, तत्र चाक्षा-दीनां कर्तृत्वात्तृतीयैव युक्तेति भावः। *पूर्वोक्तस्येति*। पूर्ववृत्तस्येत्यर्थः। अनेका-र्थत्वाद्धातूनां वचिरिह वर्त्तने वर्त्तते, तदेव *यथा न तदिति* तच्छब्देन परा-मृश्यते। पूर्वंजये वृत्तस्याक्षादेर्यथा तद्वृत्तमभूत्, यदि संप्रति तथा न भवति

न्यासः

पातप्रकारस्तदपेक्षयाऽन्यथात्वं विवक्षितम्। पञ्चसु त्वेकरूपासु जय एव भवतीति। पञ्च परीति समासो न भवतीति भावः। जये हि यदक्षादीनां वृत्तं तदपेक्षयान्यपातत्वे सति समासेन भवितव्यम्। न च पञ्चस्वेकरूपास्वन्यथात्वं सम्भवति। अत एव जयस्तदा भवति यदा पञ्चाप्येकरूपा भवन्ति---उत्ताना अवाञ्चो वा। एतेन प्रकारेण परेण चतुष्परीत्यत्रोपपत्तिर्दर्शिता। परेणेति। अतिशयेनेत्यर्थः।

अक्षादयस्तृतीयान्ता इत्यादि। अन्यथा वृत्तावयं समास इष्यते। तत्र चाक्षा-दीनामन्यथावृत्तौ कर्तृत्वं करणत्वं वा भवति, अतस्तृतीयया भवितव्यमिति तदन्ता एव समस्यन्ते। पूर्वोक्तस्येति। अक्षादेरित्यर्थः। कुत एतत्? अक्षादयस्तृतीयान्ता इति पूर्वमक्षादेरेवोक्तत्वात्। अभेदविवक्षायामेकवचनम्। षष्ठी चेयं शेषविवक्षायां वृत्तशब्दापेक्षया सम्बन्धलक्षणा, वृत्तशब्दस्त्वध्याहर्त्तव्यः। यथा न तदिति। अक्षादेः पूर्वोक्तस्य यथा वृत्तमभूत् पूर्वं जये तथा वृत्तं यदि संप्रति न भवत्येवं समासो भवति, नान्यथा। पूर्ववृत्तस्यान्यथात्वद्योतने समासोऽयम्, तच्चैकेनापि क्रियते, ततो द्विवच-नाद्यपेक्षया निष्प्रयोजनमित्याह---एकत्वेऽक्षशलाकयोरिति। अक्षशलाकयोरेकवचना-न्तयोरित्यर्थः। ततोऽयं न्यायसिद्ध एवार्थः श्लोकेन संगृहीतः।

१. 'एकरूपेषु' इति पाठः क्वाचित्कः।

## विभाषा ॥ ११ ॥

'विभाषा' इत्ययमधिकारो वेदितव्यः । यदित ऊर्ध्वंमनुक्रमिष्यामस्तद्विभाषा भवति । वक्ष्यति--'अपपरिबहिरञ्चवः पञ्चम्या', अपत्रिगतं वृष्टो देवः, अप त्रिगर्तेभ्यः ॥

## अपपरिबहिरञ्चवः पञ्चम्या ॥ १२ ॥

अप, परि, बहिस्, अञ्चु–इत्येते सुबन्ताः पञ्चम्यन्तेन सह विभाषा समस्यन्ते, अव्ययीभावश्च समासो भवति । अपत्रिगर्त्तं वृष्टो

### पदमञ्जरी

एवं समासो भवतीत्यर्थः । पूर्वोक्तस्येति सामान्यापेक्षमेकवचनम् । जयकालेऽक्षादीनां यदेकरूपं वर्त्तनं तद्विपरीते वर्त्तने परिणा द्योत्ये समास इति यावत् । *एकत्वेऽक्षशलाकयोरिति* । अक्षशलाकाशब्दयोरेकवचनान्तयोः समास इत्यर्थः । इदमप्यभिधानस्वाभाव्यादेव लभ्यते, अन्यथा 'राजपुरुषः' इत्यादाविवाभेदैकत्वमवगम्येत, न तु शुद्धमेकत्वम् । प्रायेण तु '*कितवव्यवहारे च एकत्वेऽक्षशलाकयोः*' इति श्लोकरूपेण पठ्यते, तत्रार्थान्तरं मृग्यं संहिताकार्यप्रसङ्गश्च ।

कितवव्यवहार इति किम्? अक्षेणेदं न तथा वृत्तं यथा पूर्वंशकटे । एकत्व इति किम्? अक्षाभ्यामक्षैर्वा इदं न तथा वृत्तम् । अक्षादय इति किम्? प्रसन्नेनेदं न तथा वृत्तं यथा पूर्वंजये, परिणेति वचनात्सुबन्तमात्रेण न भवति ॥

*अपपरिबहिरञ्चवः पञ्चम्या* ॥ ननु बहिःशब्देन योगे न केनचित्पञ्चमी विधीयते, तत्कथं तस्य पञ्चम्यन्तेन समासः? बहिर्गतो ग्रामादित्यत्र त्वसामर्थ्यान्नैव समासेन भवितव्यमत आह—*बहिःशब्देनेति* । न च वचनसामर्थ्याद्बहिःशब्द-

### न्यासः

अथ वा—उत्तरं विभाषाग्रहणमिहापि सिंहावलोकितन्यायेन सम्बध्यते । सा च व्यवस्थितविभाषा । तेन वचनसिद्ध एवायमर्थो वेदितव्यः । अक्षादय इति किम्? पाशकेनेदं न तथा वृत्तं यथा पूर्वं जये । परिणेति किम्? सुबन्तमात्रेण सह समासो मा भूत् । कितवव्यवहार इति किम्? अक्षेणेदं न तथा वृत्तं यथा पूर्वं शकटेन । एकत्व इति किम्? अक्षाभ्यामक्षैर्वा न तथा वृत्तं यथा पूर्वं जये ॥

**विभाषा ॥ अपपरिबहिरञ्चवः पञ्चम्या ॥** ननु बहिःशब्दयोगे न केनचित् पञ्चमी विधीयते, तत् कथं तदन्तेन समास इत्याह--**बहिःशब्दयोग इत्यादि** । यदेतत् पञ्चम्यन्तेन सह बहिश्शब्दस्य समासविधानम्, तज्ज्ञापयति—भवति हि बहिःशब्दयोगे पञ्चमीति । अथोपादानसामर्थ्याद् बहिःशब्दयोगे पञ्चमी न सम्भवतीत्यपञ्चम्यन्तेनैव

देवः, अप त्रिगर्तेभ्यः । परित्रिगर्तम्, परि त्रिगर्तेभ्यः । बहिर्ग्रामम्, बहिर्ग्रामात् । प्राग्ग्रामम्, प्राग्ग्रामात् । बहिःशब्दयोगे पञ्चमीभावस्यैतदेव ज्ञापकम् ॥

## आङ् मर्यादाभिविध्योः ॥ १३ ॥

'आङ्' इत्येतन्मर्यादायामभिविधौ च वर्तमानं पञ्चम्यन्तेन सह

पदमञ्जरी

स्यापञ्चम्यन्तेन समासो भवत्विति वाच्यम्; पञ्चमीग्रहणाद्। इह ह्यपपरिशब्दौ परस्परसाहचर्याद्वर्जनार्थौ गृह्येते, तौ च कर्मप्रवचनीयौ, तद्योगे च पञ्चम्येव विहिता। अञ्चतिरप्यपपरिसाहचर्यादव्ययमेव गृह्यते, तद्योगेऽप्यञ्चूत्तरपदलक्षणा पञ्चम्येवास्ति। तदेतत्पञ्चमीग्रहणं ज्ञापयति–षष्ठीविषये बहिर्योगे पञ्चमी भवतीति।

*आङ् मर्यादाभिविध्योः* ॥ 'मर्यादाभिविध्योः' इति शक्यमकर्त्तुम्, कथम्? पञ्चम्येति वर्त्तते, आङा च कर्मप्रवचनीयेनैव योगे पञ्चमी विहिता, एतयोश्चैवार्थयोराङः कर्मप्रवचीयसंज्ञा–'आङ् मर्यादावचने' इति। तत्र हि वचनग्रहणं मर्यादोक्ति-

न्यासः

सुबन्तमात्रेण समास इत्येवं कस्मान्न विज्ञायते? अशक्यमेतद् विज्ञातुम्; पञ्चमीग्रहणस्य वैयर्थ्यप्रसङ्गात्। तथा हि 'अपपरी वर्जने' इत्येवमपपर्य्योः कर्मप्रवचनीयसंज्ञायां सत्यां ताभ्यां योगे 'पञ्चम्यपाङ्परिभिः' इति पञ्चम्यैव भवितव्यम्, नान्यया विभक्त्या। अञ्चुशब्देनापि योगे 'अन्यारात्' इत्यादिना पञ्चम्येव भवितव्यमित्यपार्थकं पञ्चमीग्रहणं स्यात्। ननु चाकर्मप्रवचनीयौ यावपपरी तयोरपञ्चम्यन्तेन समासो मा भूदित्येवमर्थं पञ्चमीग्रहणं स्यात्––परिगतः, अपगत इति? नैतदस्ति, परत्वाद्धि तयोः 'कुगतिप्रादयः' इति तत्पुरुषेण भवितव्यम्। ननु च नाप्राप्ते ह्येतस्मिन्नयमारभ्यमाणो बाधको भवति? नैतदस्ति; कर्मप्रवचनीयौ यावपपरी तत्रावकाशः स्यात्। तत्र हि कर्मप्रवचनीयानां प्रतिषेधं वक्ष्यति। तस्माद्बहिःशब्दस्य पञ्चम्यन्तेनैव समासविधानम्, नान्येन; अन्यथा पञ्चमीग्रहणमनर्थकं स्यात्। तस्मात् साधूक्तम्––**बहिःशब्दयोगे पञ्चमीभावस्यैतदेव ज्ञापकमिति** ॥

**आङ् मर्यादाभिविध्योः** ॥ अथ मर्यादाभिविधिग्रहणं किमर्थम्, यावता पञ्चमीत्यनुवर्त्तते, आङा च कर्मप्रवचनीयेनैव योगे पञ्चमी विधीयते––एतयोरेवार्थयोः 'आङ् मर्यादावचने' इत्याङः कर्मप्रवचनीयसंज्ञा, नान्यत्र; तत्रान्तरेणापि मर्यादाभिविधिग्रहणं तयोरेवार्थयोः समासो भविष्यति, नान्यत्रेति? सत्यमेतत्; तथापि मन्दधियां सुखावबोधनार्थं मर्यादाभिविधिग्रहणम्।

विभाषा समस्यते, अव्ययीभावश्च समासो भवति। आपाटलिपुत्रं वृष्टो देवः, आ पाटलिपुत्रात्। अभिविधौ—आकुमारं यशः पाणिनेः, आ कुमारेभ्यः ॥

**लक्षणेनाभिप्रती आभिमुख्ये ॥ १४ ॥**

लक्षणम्=चिह्नम्, तद्वाचिना सुबन्तेन सहाभिप्रती शब्दावाभिमुख्ये वर्तमानौ विभाषा समस्येते, अव्ययीभावश्च समासो भवति। अभ्यग्नि शलभाः पतन्ति, अग्निमभि। प्रत्यग्नि, अग्निं प्रति। अग्निं लक्ष्यीकृत्य अभिमुखं पतन्तीत्यर्थः।

लक्षणेनेति किम्? स्रुघ्नं प्रति गतः। प्रतिनिवृत्य स्रुघ्नमेवाभिमुखं गतः। अभिप्रती इति किम्? येनाग्निस्तेन गतः। आभि-

**पदमञ्जरी**

मात्रे यथा स्याद् इत्यभिविधावपि भवति। तत्रैव वाऽभिविधिग्रहणमेवास्तु ॥

*लक्षणेनाभिप्रती आभिमुख्ये* ॥ *अभ्यग्नि, प्रत्यग्नीति*। अग्निं प्रतीति विग्रहः, 'अभिरभागे' 'लक्षणेत्थम्भूत' इति चाभिप्रत्योः कर्मप्रवचनीयत्वाद् द्वितीया। तत्राग्निर्लक्षणम्, तेन हि शलभानां पातो लक्ष्यते, अभिप्रती च लक्ष्यलक्षणभावं द्योतयित्वाभिमुख्यमपि द्योतयतः।

*स्रुघ्नं प्रतिगत इति*। स्रुघ्नादागतस्तमेव प्रतिगतः=प्रतिनिवृत्त इत्यर्थः। अत्र प्रतिगमनं प्रति कर्मत्वेन विवक्षितत्वात् स्रुघ्नो लक्षणं न भवति। *येनाग्निस्तेन गत इति*। येन देशेनाग्निर्गतस्तेनेति प्रतीतिर्भवति, गमनस्याग्निर्लक्षण-

**न्यासः**

**लक्षणेनाभिप्रती आभिमुख्ये** ॥ **अभ्यग्नि, प्रत्यग्नीति**। अग्निमभि, अग्निं प्रतीति विग्रहः। 'कर्मप्रवचनीययुक्ते द्वितीया'। कर्मप्रवचनीयसंज्ञा त्वेकस्य 'अभिरभागे' इत्यनेन। अपरस्य 'लक्षणेत्थम्भूताख्यान' इत्यादिना। अत्र चाग्निर्लक्षणम्, तेन शलभपातो लक्ष्यते। अत्राभिमुख्ये चाभिप्रती वर्त्तेते, तथा ह्ययमर्थः अभिमुखमेव शलभाः पतन्ति, नापि पार्श्वतः, नापि पृष्ठत इत्यर्थोऽवगम्यते।

**स्रुघ्नं प्रतिगत इति**। स्रुघ्नान्मथुरां प्रस्थितो दिङ्मोहात् स्रुघ्नमेव प्रतिनिवृत्त इति नात्र स्रुघ्नो लक्षणम्। यदुद्दिश्य हि गच्छति तल्लक्षणं भवति। यदा तु दिङ्मोहाद्यत एव प्रस्थितस्तमेव प्रतिगच्छति तदा तदप्रतीतं कथं लक्षणं भवति—स्रुघ्नमिति? 'तथायुक्तञ्चानीप्सितम्' इति कर्मसंज्ञायां सत्यां कर्मणि द्वितीया। **येनाग्निस्तेन गत इति** भवत्यत्राग्निर्लक्षणमाभिमुख्यमप्यस्ति, अभिप्रती तु न स्त

मुख्य इति किम् ? अभ्यङ्का गावः, प्रत्यङ्का गावः । नवाङ्का इत्यर्थः ॥

अनुर्यत्समया ॥ १५ ॥

समया = समीपम् । अनुर्यस्य समीपवाची[1] तेन लक्षणभूतेन सह

पदमञ्जरी

माभिमुख्यं चास्ति, 'येन-तेन' शब्देन सह समासः स्यात् । *अभ्यङ्काः, प्रत्यङ्का इति* । अभिनवोऽङ्क आसाम्, प्रतिनवोऽङ्क आसामिति बहुव्रीहिः । अङ्कोऽत्र भवति गवां लक्षणम्, आभिमुख्यं तु नास्ति । ननु च सति संभवेऽव्ययार्थे प्रधानेऽव्ययीभाव इत्युक्तम्, कथमत्र प्रसङ्गः ? एवं तर्ह्येतज्ज्ञापयति — भवत्यत्र प्रकरणे बहुव्रीहिविषयेऽव्ययीभाव इति । तेन 'संख्या वंश्येन', द्विमुनि व्याकरणमित्येतत्सिद्धं भवति ॥

*अनुर्यत्समया* ॥ यत्समयेति षष्ठीसमासोऽयम् । कथं पुनः समयाशब्देन योगे षष्ठी, यावता 'अभितःपरितःसमया' इति द्वितीयया भवितव्यम् ? नैष दोषः; समयाशब्दस्य मुख्योऽर्थः सामीप्यम्, तद्योगे द्वितीया । इह तु समयाशब्दवाचिन्यनुशब्दे समयाशब्दो वर्त्तते, तदाह—*अनुर्यत्समया* । *समयावाचीति* । यस्य समयेति कोऽर्थः ? समयावाचीत्यर्थः, तदिह मुख्येनार्थेनायोगाद् द्वितीया न भवति, षष्ठ्येव तु भवति, तस्याश्च समासः । न च पूरणगुणेति प्रतिषेधः; अनव्ययत्वात् । सामीप्ये हि वर्त्तमानः समयाशब्दोऽसत्त्ववाचित्वादव्ययम् । इह त्वनुशब्दार्थे वर्त्तते, तत्र यथा 'अभिरभागे' इत्यादावनुकरणस्याव्ययसंज्ञा न भवति, तथास्यापि ।

न्यासः

इति तेन येनतेनशब्दाभ्यां सह समासो न भवति । अभ्यङ्का गावः, प्रत्यङ्का गाव इति । अभिनवः प्रतिनवोऽङ्क आसामिति बहुव्रीहिः । अभिशब्दोऽत्राभिनवार्थे वर्त्तते, प्रतिशब्दश्च प्रतिनवार्थे । अङ्कोऽत्र भवति गवां लक्षणम्, आभिमुख्यन्तु नास्ति । ननु चात्र परत्वाद् बहुव्रीहिणा भवितव्यम्, अतः स बाधको भविष्यति किमाभिमुख्यग्रहणेन ? नैवम्; असत्याभिमुख्यग्रहणेऽशेषत्वात् कुतो बहुव्रीहिर्भवति ! अथ वैतज् ज्ञापयति—बहुव्रीहिरव्ययीभावेन बाध्यत इति । तेन द्वौ मुनी व्याकरणस्य वंश्यौ द्विमुनि व्याकरणमिति सिद्धं भवति; अन्यथा हि स्वपदार्थे चरितार्थोऽव्ययीभावो द्विमुनि व्याकरणमित्यत्रान्यपदार्थे परत्वाद् बहुव्रीहिणा बाध्येत ॥

अनुर्यत्समया ॥ यस्य समया यत्समयेति षष्ठीसमासोऽयम् । ननु च समयाशब्दयोगे 'अभितःपरितःसमयानिकषा' इत्याद्युपसंख्यानाद् द्वितीयया भवितव्यम्, अतः षष्ठ्येव तावन्न सम्भवति, कुतः पुनस्तस्याः समासः ? अथापि कथञ्चित् षष्ठी स्यात्, तथापि समयाशब्दस्याव्ययत्वात् 'पूरणगुण' इत्यादिना षष्ठीसमासप्रतिषेधेन भवितव्यम् ? नैष दोषः; योगग्रहणादिह समयाशब्दार्थेन योगे द्वितीया विज्ञायते । स चार्थो मुख्य एव गृह्यते न गौणः । स पुनर्मुख्योऽर्थः समीपम् । न चेह समया-

१. 'समयावाची' इति पदमञ्जरीसम्मतम् ।

विभाषा समस्यते, अव्ययीभावश्च समासो भवति। अनुवनमशनिर्गतः।

अनुरिति किम्? वनं समया। यत्समयेति किम्? वृक्षमनु विद्योतते विद्युत्। 'अव्ययं विभक्तिसमीप' इत्येव सिद्धे पुनर्वचनं विभाषार्थम्॥

यस्य चायामः॥ १६॥

'लक्षणेन' इति वर्तते। आयामः = दैर्घ्यम्। अनुर्यस्यायामवाची तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो

**पदमञ्जरी**

एवं च यत्समयेत्यविभक्तिकः सौत्रो निर्देशः। वृत्तावपि यत्समयेति सूत्रानुकरणेन विभक्त्यभावः। *तेनेति*। तद्वाचिना शब्देनेत्यर्थः। *अनुवनमिति*।

वनस्यान्विति सामीप्यसम्बन्धे षष्ठीसमासः, अस्यार्थमाह—*वनं समयेति*॥

*यस्य चायामः*॥ *लक्षणेनेति वर्त्तत इति*। अन्यथा आयामो गङ्गाया इत्यस्यार्थेऽनुगङ्गमिति स्यात्। अत्राप्यायामवाचित्वादनुरेवायामशब्देनोच्यते, इत्याह—*अनुर्यस्यायामवाचीति*। *अनुगङ्गं वाराणसीति*। षष्ठ्यन्तेन गङ्गाशब्देन समासः।

**न्यासः**

शब्दस्य मुख्योऽर्थोऽस्ति, किं तर्हि? गौणोऽर्थः। अनुरेव समयाशब्देनोच्यते, तस्माच्छेषलक्षणा षष्ठ्येव न्याय्या। अत एव द्रव्यवाचित्वादव्ययसंज्ञाया अभावात् 'पूरणगुण' इति प्रतिषेधो नोपपद्यते। **अनुर्यत्समयेति**। एतेनानुशब्दार्थे समयाशब्दो वर्त्तत इति दर्शयति। ननु च समयाशब्दस्य समीपमर्थः, तत् कथमनुशब्दः समयाशब्देनोच्यत इत्याह—**यस्य समीपवाचीति**। एतेन समयाशब्दार्थाभिधायित्वादनुशब्दः समयाशब्देनोपचाराद्व्यपदिष्ट इत्याचष्टे। भवत्युपचारेण हि तदर्थाभिधायिनि तद्व्यपदेशः, यथा—सीताहरणं काव्यमिति। तेनेत्यनेन यस्यानुशब्दः समयावाची स परामृश्यते। ननु च सोऽर्थः, तत् कुतस्तेन समासः? अर्थे कार्यासम्भवात् तद्वाचिनि शब्दे कार्यं विज्ञायते, तथा च तेनेत्यस्य तद्वाचिना शब्देनेत्ययमर्थोऽत्र गम्यते। **अनुवनमिति**। तेनेत्यनेन यत् षष्ठ्यन्तं तेन वनशब्देन समासः। वनस्यान्विति समीपसमीपिसम्बन्धे षष्ठ्येव युक्ता।

**वनं समयेति**। पूर्वोक्तेनोपसंख्यानेन वनशब्दाद् द्वितीया। **वृक्षमनु विद्योतते विद्युदिति**। अत्र कर्मप्रवचनीयलक्षणा द्वितीया। अनुशब्दोऽत्र लक्षणे वर्त्तते, न सामीप्ये॥

**यस्य चायामः**॥ अत्राप्युपचारेणायामवाचित्वादनुरेवायामशब्देनोक्तः। **अनुगङ्गं वाराणसीति**। यद्यपि गङ्गावाराणस्यावुभे अप्यायामवत्यौ, तथाप्यायामवत्तया गङ्गायाः प्रसिद्धत्वाद् गङ्गैवात्र लक्षणम्, न वाराणसी। प्रसिद्धं हि लक्षणं भवति, नाप्रसिद्धम्।

भवति। अनुगङ्गं वाराणसी। अनुयमुनं मथुरा। यमुनाऽऽयामेन मथुराऽऽयामो लक्ष्यते।

आयाम इति किम्? वृक्षमनु विद्योतते विद्युत्॥

## तिष्ठद्गुप्रभृतीनि च॥ १७॥

तिष्ठद्ग्वादयः समुदाया एव निपात्यन्ते। तिष्ठद्गुप्रभृतीनि शब्द-रूपाणि अव्ययीभावसंज्ञकानि भवन्ति। तिष्ठद्गु = कालविशेषः।

### पदमञ्जरी

*गङ्गाया अन्विति*। आयामो लक्षणत्वं चानुना द्योत्यते, लक्षणस्य लक्ष्यापेक्षत्वाल्लक्ष्यं समासार्थं इत्यर्थादुपमानोपमेयभावे समास इति वाराणस्या सामानाधिकरण्यम्—गङ्गाया इवायामो यस्याः, गङ्गेवायता वाराणसीत्यर्थः। तद्वदत्यन्तायतेत्यर्थ इति केचित्। तथा च 'अनुगङ्गमेतत्सूत्रम्' इत्येकशेषसूत्रे *भागवृत्तिकारः* प्रयुङ्क्ते। नेति वयम्। किं प्रागायता वाराणसी? उतोदगायता? इति संदेहे इदमुच्यते—अनुगङ्गं वाराणसीति, यथोदगायता गङ्गा तथोदगायता वाराणसीत्यर्थः। गङ्गायामानुसारेण वाराणस्यायाम इत्यर्थः। *यमुनायामेन मथुरायामो लक्ष्यत इति*। न यमुना स्वरूपेण लक्षणम्, किं तर्हि? आयामेन, मथुरापि न स्वरूपेण लक्ष्यम्, किं तर्हि? आयामेन। तत्र प्राप्ताप्राप्तविवेकेनेदमुच्यते—यमुनायामेन मथुरायामो लक्ष्यत इति॥

*तिष्ठद्गुप्रभृतीनि च॥ समुदाया एव निपात्यन्त इति*। गणे तथा पाठ एव तेषां निपातनम्। तेन शतृशानजाद्यपि भवति। 'सुपो धातुप्रातिपदिकयोः' इति च प्रक्रियाकार्यं न कर्त्तव्यमिति भावः। *अव्ययीभावसंज्ञानि भवन्तीति*। समाससंज्ञापि

### न्यासः

तस्माद् गङ्गयैवात्र समासो भवति, न वाराणस्या। यमुनायामेन मथुरायामो लक्ष्यत इति। यमुनया तद्वत्या लक्षणभूतयेति वेदितव्यम्। यस्माद् यस्यायामवाच्यनुशब्दस्तेन लक्षणभूतेन सुबन्तेन समस्यते। यमुनायाश्चायामवाच्यनुशब्दः, न यमुनायामस्य। न ह्यायामस्यापर आयामोऽस्ति, तस्माद् यमुनायामेनेति हेताविय़ं तृतीया। यमुनायामेन हेतुना तद्वत्या यमुनया लक्षणभूतया करणभावमापन्नया वा मथुरायामो लक्ष्यत इत्ययमर्थो वेदितव्यः।

तिष्ठद्गुप्रभृतीनि च॥ तिष्ठद्गुप्रभृतीनां गणपाठादेव कृतसाधुत्वानामिह प्रकरणे संकीर्त्तनमव्ययीभावसंज्ञार्थम्, न तु सुबन्तेन समासार्थम्। अत एवाह—समुदाया एव निपात्यन्त इति। तथाभूतानां पाठ एवैषां निपातनम्। अव्ययीभावसंज्ञकानि भवन्तीति। अनेन संज्ञामात्रं विधीयते, न त्वेषां सुबन्तेन समास इति दर्शयति।

तिष्ठन्ति गावो यस्मिन्काले दोहनाय स तिष्ठद्गु कालः। खलेयवादीनि प्रथमान्तानि विभक्त्यन्तरेण न संबध्यन्ते, अन्यपदार्थे च काले वर्तन्ते। चकारोऽवधारणार्थः। अपरः समासो न भवति—परमतिष्ठद्ग्विति।

तिष्ठद्गु। वहद्गु। आयतीगवम्। खलेयवम्। खलेबुसम्। लूनयवम्। लूयमानयवम्। पूतयवम्। पूयमानयवम्। संहृतयवम्। संह्रियमाणयवम्। संहृतबुसम्। संह्रियमाणबुसम्। एते कालशब्दाः।

समभूमि। समपदाति। सुषमम्। विषमम् निष्षमम्। दुष्षमम्।

पदमञ्जरी

विधेया, अन्तोदात्तत्वं च। *प्रातिपदिकसंज्ञा च यथा स्यादिति*। *तिष्ठद्गु कालविशेष इति*। कालविशेष इत्येतदुक्तैरपि सम्बध्यते, अत एवान्ते वक्ष्यति—'एते कालशब्दाः' इति, एतावान्कालविशेष इत्यस्याधिकार इत्यर्थः। *विभक्त्यन्तरेण न सम्बध्यन्ते इति*। अव्यतिरिक्त एव प्रातिपदिकार्थे प्रयोग एषां कर्त्तव्यः, नान्यत्रेत्यर्थः। *अन्यपदार्थे च वर्त्तन्त इति*। तिष्ठद्गु, वहद्गु, आयतीगवमित्येतैरप्यस्य सम्बन्धः; अन्यथा कालशब्दत्वायोगात्। *चकारोऽवधारणार्थ इति*। अनेकार्थत्वान्निपातानाम्। *अपरः समासो न भवतीति*। वृत्त्यन्तरं न भवतीत्यर्थः। 'आतिष्ठद्गु जपन्सध्याम्' इति तु पञ्चम्या 'अव्ययात्' इति लुक्, न समासः।

*तिष्ठद्गु, वहद्ग्विति*। लटः शत्रादेशो निपातनात्, 'गोस्त्रियोः' इति ह्रस्वः। *आयतीवगवमित्यत्र* तु पुंवद्भावाभावः शत्रादेशः समासान्तश्च। *खलेयवं खलेबुसमिति* सप्तम्या अलुक्। *लूयमानयवादिषु* शानजादेशः।

*समभूमि, समपदातीति*॥ समत्वं भूमेरिति पूर्वपदार्थप्राधान्येऽव्ययीभावः।

न्यासः

**तिष्ठद्गु वहद्गु इति**। पूर्वपदस्य शत्रादेशो निपात्यते। 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः। तिष्ठन्ति गावो यस्मिन् काले स तिष्ठद्गु कालः। वहन्ति गावो यस्मिन् काले स वहद्गु कालः। **चकारोऽवधारणार्थ इति**। असति तस्मिन् परमतिष्ठद्ग्विति 'सन्महत्' इत्यादिना परमशब्देन समासः स्यात्। अवधारणार्थे तु तस्मिन् तिष्ठद्गुप्रभृतीनीत्येवम्भूतान्येवावतिष्ठन्ते। **आयतीगवमिति**। पुंवद्भावाभावः समासान्तश्च भवति। आयत्यो गावो यस्मिन् काले स आयतीगवम्। **खलेयवम्। खलेबुसमिति**। सप्तम्या अलुग् निपात्यते। **लूयमानयवमिति**। शानज् निपात्यते। तथा **पूयमानयवमित्यत्रापि**। **एते कालशब्दा इति**। तिष्ठद्गुप्रभृतयः संह्रियमाणबुसपर्यन्ताः।

**समभूमि, समपदातीति**। समत्वं भूमेः, समत्वं पदातेरिति पूर्वपदार्थप्राधान्येऽव्य-

अपरसमम् । आयतीसमम् । प्राह्णम् । प्ररथम् । प्रमृगम् । प्रदक्षिणम् । अपरदक्षिणम् । सम्प्रति । असम्प्रति । पापसमम् । पुण्यसमम् । 'इच् कर्मव्यतिहारे'–दण्डादण्डि । मुसलामुसलि ॥

## पारे मध्ये षष्ठ्या वा ॥ १८ ॥

षष्ठीसमासे प्राप्ते तदपवादोऽव्ययीभाव आरभ्यते । वावचनाच्च

### पदमञ्जरी

क्वचित् *समंभूमि समंपदातीति* पाठः, तत्र पूर्वपदस्य मुमागमः । अन्ये तु—*संभूमि संपदातीति* पठन्ति, तत्र समस्यान्तलोपः, संशब्दस्य वा समासः । सुषमादौ शोभनत्वं समस्य विगतत्वं दुष्टत्वं निर्गतत्वमपगतत्वं समस्येति विग्रहः । आयतोसमा आयतीसमम्, शत्रादेशः, पूर्ववत् पुंवद्भावश्च । समा=संवत्सरः । एवं *पापसमं पुण्यसममिति* । प्राह्णादिषु चतुर्षु प्रगतत्वमह्न इत्यादिविग्रहः । सङ्गतं प्रतिगतमस्य *सम्प्रति* । विपरीतम् *असम्प्रति* । *इच् कर्मव्यतीहार इति* । अयमेव द्विदण्ड्यादिष्वपि विधीयत इति तत्र व्ययीभावः । *दण्डादण्डीति* । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तम्, 'तत्र तेनदमिति सरूपे' इति बहुव्रीहिः । 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः । इच अव्ययीभावत्वेनाव्ययत्वात्सुपो लुक् ॥

*पारे मध्ये षष्ठ्या वा* ॥ *वावचनादिति* । ननु महाविभाषयैवापवादेऽव्ययीभावे विकल्पिते पक्षे षष्ठीसमासोऽपि भविष्यति, सोऽपि विकल्पित इति वाक्यमपि

### न्यासः

यीभावः । उत्तरपदार्थप्राधान्यविवक्षायान्तु समपदातिः समभूमिरिति विशेषणसमासस्तत्पुरुषो भवति । अन्ये मकारान्तं समशब्दं पठन्ति–समम्भूमि समम्पदातीति । **सुषमम्, विषमम्, दुःषमम्; अपरसममिति** । समशब्देनेति । सुषमादयश्चैते पूर्वपदार्थप्राधान्ये समासाः । अत्र शोभनत्वं समस्येत्येवमादि वाक्यं द्रष्टव्यम् । उत्तरपदार्थप्राधान्ये तु प्रादिसमासो विशेषणसमासश्च यथायोगं कर्त्तव्यः । **आयतीसममिति** । समाशब्दः संवत्सरवाची, तेन समासः—आयती समा आयतीसमम् । एवं पापा समा पापसमम् । पुण्या समा पुण्यसमम् । अन्ये तु तृतीयासमासं वर्णयन्ति–आयत्या समम् आयतीसममिति एवमन्यत्रापि । प्रगतत्वमह्नः **प्राह्णम्** । अयमपि पूर्वपदार्थप्रधानः । उत्तरपदार्थप्राधान्ये तु तत्पुरुष एव भवति—प्राह्णे कल्याणनामानावेतौ तिष्यपुर्नवसू इति । एवं **प्ररथम्, प्रदक्षिणम्, प्रमृगम्, अपरदक्षिणम्, संप्रति, असम्प्रति** । **'इच् कर्मव्यतीहारे'** इतीचोऽव्ययीभावत्वे प्रयोजनमव्ययसंज्ञा, नपुंसकत्वञ्च । **दण्डैश्च दण्डैश्च** प्रहृत्येदं युद्धं वृत्तमिति । 'तत्र तेनेदमिति सरूपे' इति समासः, 'इच् कर्मव्यतीहारे' इतीच् समासान्तः—'अन्येषामपि दृश्यते' इति दीर्घः, **दण्डादण्डीति** ॥

**पारे मध्ये षष्ठ्या वा** ॥ ननु च प्रकृतैव महाविभाषा, तयैव विकल्पो भविष्यति,

षष्ठीसमासोऽपि पक्षेऽभ्यनुज्ञायते । पारमध्यशब्दौ षष्ठ्यन्तेन सह विभाषा समस्येते, अव्ययीभावश्च समासो भवति । तत्सन्नियोगेन चानयोरेकारान्तत्वं निपात्यते । पारं गङ्गायाः पारेगङ्गम् । मध्यं गङ्गायाः मध्येगङ्गम् । षष्ठीसमासपक्षे—गङ्गापारम्, गङ्गामध्यम् । महाविभाषया वाक्यविकल्पः क्रियते ॥

## संख्या वंश्येन ॥ १९ ॥

विद्यया जन्मना वा प्राणिनामेकलक्षणसंतानो वंश इत्यभिधीयते । तत्र भवो वंश्यः । तद्वाचिना सुबन्तेन सह संख्या समस्यते, अव्ययीभावश्च समासो भवति । द्वौ मुनी व्याकरणस्य वंश्यौ द्विमुनि व्याकरणस्य । त्रिमुनि व्याकरणस्य ।

### पदमञ्जरी

भविष्यति ? उच्यते—इह वाक्येनाभिधाने प्राप्ते वृत्तिरारभ्यमाणा वाक्यस्य बाधिका प्राप्नोतीति विकल्पेन वाक्यमेव पक्षेऽभ्यनुज्ञायते । तत्रापवादविकल्पो वाक्यस्यैव प्रापक इत्युत्सर्गस्य नित्यो बाधकः स्याद्, वावचनात्सोऽपि पक्षेऽभ्यनुज्ञायत इति त्रैरूप्यसिद्धिः । एतदेव वावचनं ज्ञापकम्—यत्रोत्सर्गापवादौ महाविभाषया विकल्पितौ तत्रापवादेन मुक्ते उत्सर्गो न भवतीति । तेन पूर्वं कायस्येत्यत्रैकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति, दक्षस्यापत्यं दाक्षिरित्यत्र इञा मुक्तेऽण्न भवति । एकारान्तत्वनिपातनं यत्र सप्तम्यर्थो न सम्भवति—पारेगङ्गादानयेति, तदर्थम् । सम्भवे तु 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनादलुका सिद्धम् ॥

*संख्या वंश्येन* ॥ *एकलक्षण इति* । एकस्वभावः सन्तानः=सम्बन्धः, सन्तानिनामेकलक्षणत्वात्सन्तानस्यैकलक्षणत्वम् । *द्वौ मुनी इति* । पाणिनिकात्यायनौ ।

### न्यासः

तत् किं वाग्रहणेनेत्याह—वावचनादित्यादि । गतार्थम् । यदि तर्हि वावचनात् पक्षे षष्ठीसमासो भवति, महाविभाषया किं क्रियत इत्याह—महाविभाषयेत्यादि ।

**संख्या वंश्येन ॥ एकलक्षण इति** । एकस्वभावः । **सन्तानः**=प्रबन्धः । सन्तानिनामेकलक्षणत्वात् सन्तानोऽप्येकलक्षणो भवति । तत्र विद्ययैकलक्षणः—वैयाकरणवंशः, उपाध्यायवंश इति । जन्मना—ब्राह्मणवंशः, क्षत्रियवंश इति । **तत्र भवो वंश्य इति** दिगादित्वाद् यत् । **द्वौ मुनी इति** पाणिनिकात्यायनौ । **व्याकरणस्येति** सम्बन्धलक्षणा षष्ठी । **त्रिमुनि व्याकरणस्येति** । पूर्वौ द्वौ, भाष्यकारस्तृतीयः । **विद्ययेति** व्याकरणा-

यदा तु विद्यया तद्वतामभेदविवक्षा तदा सामानाधिकरण्यं भवति—द्विमुनि व्याकरणम्, त्रिमुनि व्याकरणमिति ।

जन्मना—एकविंशति भारद्वाजम् ॥

**नदीभिश्च ॥ २० ॥**

'संख्या' इत्यनुवर्तते । नदीवचनैः शब्दैः सह संख्या समस्यते, अव्ययोभावश्च समासो भवति । समाहारे चायमिष्यते । सप्तगङ्गम् ।

**पदमञ्जरी**

*त्रिमुनीति* । तौ च भाष्यकारश्च । जन्मना त्वेकलक्षणस्योदाहरणम्—*एकविंशति भारद्वाजमिति* ।

*यदा तु विद्यया सहेति* 'लक्षणेनाभिप्रती' इत्यत्र प्रकारान्तरेणाप्ययमर्थः साधितः ॥

*नदीभिश्च* ॥ *नदीवचनैः शब्दैरिति* । नदीभिरिति बहुवचननिर्देशात्स्वरूपस्य संज्ञा नद्याश्च ग्रहणमिति भावः । *समाहारे चायमिष्यत इति* । अन्यथा पुरस्तादपवादन्यायेन 'पूर्वकालैक' इत्यस्यायं बाधकः स्यात् । समाहारे तु परत्वाद् द्विगुरेव स्यात्, ततश्चैकनदीत्यत्राव्ययीभावे सति तन्निबन्धनः 'नदीपौर्णमास्याग्रहायणीभ्यः' इति टच् प्राप्नोति नपुंसकत्वं च, न ह्यत्र विशेषवाचिनामेव ग्रहणमिति प्रमाणमस्ति । यस्तु 'गोदावर्याश्च नद्याश्च' इत्यच् समासान्तः, स पञ्चनदमित्यादावव्ययीभाव एव भवति, एकनदीत्यत्र तत्पुरुषे न भवति । समाहारविवक्षायां च एकापूपीवदेकनदमित्यपि भवति । तथान्यपदार्थेऽप्यव्ययीभावः स्याद्—द्वीरावतीको देश इति । न चात्र परत्वाद्बहुव्रीहिः; अशेषत्वात्, न ह्यसति समाहारग्रहणेऽयं शेषो भवति । तस्मात्सुष्ठूक्तम्—*समाहारे चायमिष्यत इति* । एतच्चाभिधानस्वाभाव्याल्लभ्यते ॥

**न्यासः**

ख्यया । तद्वतामिति पाणिनिप्रभृतीनाम् । अभेदविवक्षेति । यौ तौ द्वौ मुनी तावेव व्याकरणमित्यतिशयेन विद्यया योगं तयोराख्यातुमभेदविवक्षा यदा क्रियते तदा सामानाधिकरण्यं भवति—द्विमुनि व्याकरणमिति ॥

नदीभिश्च ॥ चकारेण संख्येत्यनुकृष्यते । बहुवचननिर्देशेनार्थस्येदं ग्रहणम्, न स्वरूपस्य, नापि संज्ञायाः; तेन सर्वैर्नदीवाचिभिः समासो विज्ञायत इत्याह—नदीवचनैरित्यादि । समाहारे चायमिष्यत इति । चकारोऽवधारणे—समाहार एव नान्यत्रेति । यद्येवम्, समाहारग्रहणं कर्त्तव्यम्? न कर्त्तव्यम्, यत एव हेतोरक्षादीनां परिणा सह कितवव्यवहार एव समासो भवति, तत एव हेतोरयमपि समाहार भविष्यति—

द्वियमुनम् । पञ्चनदम् । सप्तगोदावरम् ॥

अन्यपदार्थे च संज्ञायाम् ॥ २१ ॥

'संख्या' इति निवृत्तम् , नदीग्रहणमनुवर्तते । नदीभिः सह सुबन्तमन्यपदार्थे वर्त्तमानं संज्ञायां विषये समस्यते, अव्ययीभावश्च समासो भवति । विभाषाधिकारेऽपि नित्यसमास एवायम् । न हि वाक्येन संज्ञा गम्यते । उन्मत्तगङ्गं नाम देशः । लोहितगङ्गम् । कृष्णगङ्गम् । शनैर्गङ्गम् ।

अन्यपदार्थं इति किम् ? कृष्णवेण्णा । संज्ञायामिति किम् ? शीघ्रगङ्गो देशः ॥

तत्पुरुषः ॥ २२ ॥

'तत्पुरुषः' इति संज्ञाऽधिक्रियते प्राग्बहुव्रीहेः । यानित ऊर्ध्वमनुक्रमिष्यामस्तत्पुरुषसंज्ञास्ते वेदितव्याः । वक्ष्यति–'द्वितीयाश्रितातीतपतित' इति, कष्टश्रितः । पूर्वाचार्यसंज्ञा चेयं महती, तदङ्गीकरणमुपाधेरपि तदीयस्य परिग्रहार्थम्–'उत्तरपदार्थप्रधानस्तत्पुरुषः' इति ।

पदमञ्जरी

*तत्पुरुषः ॥ उत्तरपदार्थप्रधान इति* । पूर्वकायः, अर्द्धपिप्पलीत्यादौ त्वधिकारवशात्तत्पुरुष इति संज्ञा ॥

न्यासः

सप्त गङ्गा समाहृताः सप्तगङ्गमिति । पूर्ववद् ह्रस्वः । अन्यपदार्थे तु न भवति–द्वैरावतीको देश इति । पञ्चनदम् । सप्तगोदावरमिति ।

कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः ।
गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि ॥

इति वचनादच्समासान्तः ॥

अन्यपदार्थे च संज्ञायाम् ॥ कृष्णवेण्णेति । कृष्णा चासौ वेण्णा चेति विशेषणसमासः । शीघ्रगङ्ग इति बहुव्रीहिः ।

तत्पुरुषः ॥ कष्टश्रित इति । तत्पुरुषसंज्ञायां सत्याम् 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदप्रकृतिस्वरत्वम् । अथ किमर्थमियं महती संज्ञा विधीयत इत्याह—पूर्वाचार्यसंज्ञा चेयमिति । तदङ्गीकरणं किमर्थमित्याह—तदङ्गीकरणमित्यादि । उपाधिः—विशेषणम् । कः पुनरसौ तदीय उपाधिरित्याह—उत्तरपदार्थप्रधानस्तत्पुरुष इति ॥

तत्पुरुषप्रदेशाः—'तत्पुरुषे कृति बहुलम्' इत्येवमादयः ॥

द्विगुश्च ॥ २३ ॥

द्विगुश्च समासस्तत्पुरुषसंज्ञो भवति । द्विगोस्तत्पुरुषत्वे समासान्ताः प्रयोजनम् । पञ्चराजी, दशराजी । द्व्यहः, त्र्यहः । पञ्चगवम्, दशगवम् ॥

द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ २४ ॥

'सुप्' 'सुपा' इति वर्तते, तस्य विशेषणमेतद् द्वितीया। द्वितीयान्तं सुबन्तं श्रितादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति । कष्टं

पदमञ्जरी

*द्विगुश्च* ॥ *समासान्ता इति* । यद्यपि 'राजाहःसखिभ्यष्टच्' 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' इति टजचौ तत्पुरुषनिबन्धनौ, तथापि प्रकृतिभेदाद्भेदविवक्षयां बहुवचनम् । *पञ्चराजमिति* । उत्तरपदस्यानकारान्तत्वात्स्त्रीत्वाभावः । समासार्थोत्तरपदस्यान्ताः समासान्ता इति तु पक्षे पात्रादित्वात् । क्वचित् *पञ्चराजीति* स्त्रीलिङ्गस्य पाठः, स भाष्यविरोधादपपाठः । *द्व्यह इति* । 'अह्नष्टखोरेव' इति टिलोपः, 'रात्राह्नाहाः पुंसि' । *पञ्चगवमिति* । 'गोरतद्धितलुकि' इति टच्, पूर्ववत्स्त्रीत्वाभावः ॥

*द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः* ॥ श्रितादिषु गत्यर्थत्वात्कर्तरि क्तः । पतिरपि सकर्मकः, नेज्जिह्मायन्तो नरकं पतामेति यथा । अत्यासः=व्यतिक्रमः, गतिविशेष एव । प्राप्तिरप्यत्र गतिरेव, न फलम् । एवमापत्तिरपि । इह श्रित-

न्यासः

द्विगुश्च ॥ समासान्ताः प्रयोजनमिति । 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' इत्यतस्तत्पुरुष इत्यनुवर्तमाने 'राजाहःसखिभ्यष्टच्', 'गोरतद्धितलुकि' इति च द्विगोरपि यथा स्यात् । पञ्चराजीति । पञ्चानां राज्ञां समाहार इति 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः । 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञा, टच्, 'नस्तद्धिते' इति टिलोपः, 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति स्त्रीलिङ्गता, 'द्विगोः' इति ङीप् । द्व्यहः, त्र्यह इति । 'अह्नष्टखोरेव' इति टिलोपः, 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम् । पञ्चगवमिति । 'स नपुंसकम्' इति नपुंसकत्वम् । सत्यप्यकारान्तत्वे स्त्रीत्वं न भवति; 'पात्रादीनां प्रतिषेधो वक्तव्यः' इति वचनात् ॥

द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ श्रितादिष्वित्यादि । श्रितादिषु समासकारणत्वेनोपात्तेषु सत्सु गमिगाम्यादीनां समासस्योपसंख्यानं प्रतिपादनं कर्तव्य-

श्रितः कष्टश्रितः । नरकश्रितः । अतीत— कान्तारमतीतः कान्तारातीतः । पतित—नरकं पतितः नरकपतितः । गत—ग्रामं गतः ग्रामगतः ।

पदमञ्जरी

पतितगतैरयं समासो न विधेयः, कथम् ? यः कष्टं श्रितः कष्टं तेन श्रितं भवति तत्र बहुव्रीहिणा सिद्धम्; नार्थभेदः, न रूपभेदः, न स्वरभेदः। तत्पुरुषेऽपि 'अहीने द्वितीया' इति श्रितपतितगतेभ्यः पूर्वपदप्रकृतिस्वर एव भवति । अतीतादिभिस्तु स्वरसिद्धये विधेयः, तथा हि— तैस्तत्पुरुषे थाथादिस्वरेण भाव्यम्, नाहीनस्वरेण; 'अतीतात्यस्तयोरहीने' इति निषेधात्, प्राप्तापन्नयोस्त्वहीने द्वितीयानुपसर्गं इति वचनात् । बहुव्रीहौ तु पूर्वपदप्रकृतिस्वरेण भाव्यम्, तस्माच्छ्रितादिभिरयं समासो न विधेयः। तत्रायमप्यर्थः, 'अहीने द्वितीया' इत्येतदपि न वक्तव्यं भवति । जातिस्वरप्रसङ्गस्तु, यदा जातिकालसुखादिभ्यः परे श्रितादयो भवन्ति तदा पूर्वपदप्रकृतिस्वरं बाधित्वा 'जातिकालसुखादिभ्योऽनाच्छादनात्' इत्यन्तोदात्तत्वप्रसङ्गः। ननु च तत्पुरुषारम्भेऽपि बहुव्रीह्यर्थविवक्षायां न दण्डवारितो बहुव्रीहिरिति जातिस्वरः स्यादेव ? एवमप्यस्ति भेदः, तत्पुरुषे 'अहीने द्वितीया' इति पूर्वपदप्रकृतिस्वरः, बहुव्रीहौ 'जातिकाल' इत्यन्तोदात्तत्वमिति द्वौ स्वरौ भवतः; अनारम्भे तु जातिस्वर एव स्यादिति । एवं तर्हि यदेतद्वा जात इति तद्वा जातश्रितपतितगतेष्विति वक्तव्यम् ? एवमपि 'अहीने द्वितीया' इत्येतदपि न वक्तव्यमित्यस्त्येव लाघवम् । एतावांस्तु विशेषः—तत्पुरुषारम्भे तत्र पूर्वपदप्रकृतिस्वरत्वम्, बहुव्रीहौ तु जातिस्वर इति द्वयोः समासयोर्द्वैस्वर्यम्; अनारम्भे तु बहुव्रीहावेव द्वैस्वर्यमिति ?

अत्रोच्यते—जातिकालसुखादिव्यतिरिक्तैः सह बहुव्रीहौ श्रितादीनां निष्ठेति पूर्वनिपातप्रसङ्गाद्रूपभेदः, तथा सर्वत्र कबपि प्राप्नोति । नन्वसौ 'शेषाद्विभाषा' इति विकल्पितः, स च तत्पुरुषारम्भेऽपि भवत्येव, बहुव्रीहेरप्यभ्युपगमात् ? एवमपि बहुव्रीहावपि द्वैस्वर्याभ्युपगमात्पूर्वपदप्रकृतिस्वरपक्षेऽपि बहुव्रीहित्वानपायात्पक्षे कपः प्रसङ्गः; तत्पुरुषारम्भे तु तत्रैव 'अहीने द्वितीया' इति पूर्वपदप्रकृतिस्वरः,

न्यासः

मित्यर्थः । एतैरपि समासः प्रतिपादयितव्यः। तत्रेदं प्रतिपादनम्—'द्वितीया' इति योगविभागः क्रियते, तेन गमिगामिप्रभृतिभिरपि समासो भवति । न चैवं श्रितादिग्रहणमनर्थकम् ; पूर्वविषयस्यासर्वविषयत्वज्ञापनार्थत्वात् । आदिशब्दः प्रकारवाची । गमिगामिशब्दयोरेकतरोपादानेनैव सिद्धे द्वयोरुपादानमुणादीनामन्येषाञ्च यथा स्यात् ; अन्यथा यदि गमिग्रहणमेव क्रियेत तदाऽऽदिशब्दस्य प्रकारवाचित्वाद् गमिप्रकाराणा-

अत्यस्त—तरङ्गानत्यस्तः तरङ्गात्यस्तः। तुहिनात्यस्तः। प्राप्त—सुखं प्राप्तः सुखप्राप्तः। आपन्न—सुखमापन्नः सुखापन्नः। दुःखापन्नः॥

* श्रितादिषु गमिगाम्यादीनामुपसंख्यानम् *। ग्रामं गमी ग्रामगमी। ग्रामं गामी ग्रामगामी। ओदनं बुभुक्षुः ओदनबुभुक्षुः॥

## स्वयं क्तेन॥ २५॥

'स्वयम्' एतदव्ययमात्मनेत्यस्यार्थे वर्त्तते, तस्य द्वितीयया सह

### पदमञ्जरी

बहुव्रीहौ तु जातिस्वर एव नित्यमित्यन्तोदात्तादेव कब्न पूर्वपदप्रकृतिस्वरादित्यस्त्येव विशेषः। तथाऽर्थभेदोऽपि 'गत्यर्थकर्मक' इति कर्तरि क्तो धात्वर्थस्य सर्वात्मनाऽनिष्ठितत्वेऽपि भवति—आरूढो वृक्षं देवदत्त इति वृक्षस्य एवोच्यते। कर्मणि तु भवन्सर्वात्मना निष्ठितत्वे भवति—आरूढो वृक्षो देवदत्तेनेति, तथेहापि कष्टं श्रित इति कष्टमनुभवन्नेवमुच्यते, कष्टं श्रितमनेनेत्यनुभूतकष्टः श्रितशब्दविवक्षितस्यार्थस्य साक्षादवगतिर्भवति तत्पुरुषे। बहुव्रीहौ त्वर्थात्, तद्यथा—राज्ञः सखेत्युक्ते नूनं राजाप्यस्य सखेति स एष सूक्ष्मदृशामेव विषयः।

*गमिगाम्यादीनामिति*। उणादीनामन्येषां च संग्रहार्थमुभयोरुपादानम्। *ग्रामं गमीति*। 'गमेरिनिः' इत्यौणादिक इनिप्रत्ययः 'भविष्यति गम्यादयः' इति भविष्यति काले। *ग्रामं गामीति*। आवश्यके णिनिः। 'गत्यर्थकर्मणि' इत्यत्र द्वितीयाग्रहणमपवादविषयेऽपि विधानार्थमिति कृत्प्रयोगे द्वितीयैव भवति। *ओदनं बुभुक्षुरिति*। भुजेः सन्, 'सनाशंसभिक्ष उः'। 'न लोकाव्यय' इति षष्ठीनिषेधः॥

*स्वयं क्तेन*॥ *स्वयं धौताविति*। 'धावु गतिशुद्ध्योः', 'उदितो वा' इति क्त्वायां

### न्यासः

मुणादीनामेव ग्रहणं स्यात्। अथ गामिग्रहणमेव क्रियेत, तदा गामिप्रकाराणामनुणादीनां स्यात्। तस्माद् द्वयोरपि ग्रहणं कर्त्तव्यम्। ग्रामं गमीति। 'गमेरिनिः' इतीनिप्रत्ययः। स च भविष्यत्काले; 'भविष्यति गम्यादयः' इति वचनात्। ग्रामं गामीति। 'आवश्यकाधमर्ण्ययोः' इत्यावश्यकेणिनिः। 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठीप्रतिषेधः। ओदनं बुभुक्षुरिति। भुजेः सन्नन्तात् 'सनाशंसभिक्ष उः' इत्युप्रत्ययः। 'न लोक' इत्यादिना षष्ठीप्रतिषेधः। कष्टं श्रित इत्यादावप्यनेनैव षष्ठीप्रतिषेधः।

**स्वयं क्तेन॥ तस्य द्वितीयया सह सम्बन्धो नोपपद्यत इति।** द्वितीयार्थासम्भवात्। इतिशब्दो हेतौ। यतस्तस्य द्वितीयया सह सम्बन्धोऽनुपपन्नस्तस्माद् द्वितीयाग्रहणमुच-

संबन्धो नोपपद्यत इति द्वितीयाग्रहणमुत्तरार्थमनुवर्त्तते। 'स्वयम्' इत्येतत्सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। स्वयंधौतौ पादौ। स्वयंविलीनमाज्यम्। ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति ॥

## खट्वा क्षेपे ॥ २६ ॥

खट्वाशब्दो द्वितीयान्तः क्तान्तेन सह क्षेपे गम्यमाने समस्यते, तत्पुरुषश्च समासो भवति। क्षेपः = निन्दा, स च समासार्थ एव, तेन विभाषाधिकारेऽपि नित्यसमास एवायम्। न हि वाक्येन क्षेपो गम्यते। खट्वारोहणं चेह विमार्गप्रस्थानस्योपलक्षणम्। सर्व एवाविनीतः

**पदमञ्जरी**

विकल्पितेट्त्वात् 'यस्य विभाषा' इतीट्प्रतिषेधः, 'च्छ्वोः शूडनुनासिके च' इत्यूठ्, 'एत्येधत्यूठ्सु' इति वृद्धिः। *स्वयंविलीनमिति*। 'लीङ् श्लेषणे', 'स्वादय ओदितः', 'ओदितश्च' इति निष्ठानत्वम्, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणाद्विलीनशब्दः क्तान्तः। *ऐकपद्यमैकस्वर्यं समासत्वादिति*। समसनं समासः, संज्ञा वा, ततो हेतोरित्यर्थः ॥

*खट्वा क्षेपे* ॥ *खट्वारोहणं चेत्यादि*। विनिन्दितो मार्गः=विमार्गः। भूमिशयनार्हो ब्रह्मचारी, वेदाध्ययनकाले तेनाधीत्य स्नात्वा गुरुभिरनुज्ञातेन खट्वा

**न्यासः**

रार्थमनुवर्त्तते, न त्वेतदर्थम्। स्वयंधोतौ पादाविति। 'धावु गतिशुद्धयोः', अस्योदित्वाद् विभाषितेट्। 'यस्य विभाषा' इतीट्प्रतिषेधः। 'च्छ्वोः शूडनुनासिके च' इत्यूठ्। 'एत्येधत्यूठ्सु' इति वृद्धिः। स्वयंविलीनमाज्यमिति। 'लीङ् श्लेषणे', 'स्वादय ओदितः' इत्योदित्त्वाद् 'ओदितश्च' इति नत्वम्। 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति गतिपूर्वस्यापि समासो भवति। कः पुनरत्र समासे सति विशेषः, यावता विनापि तेनैतद्रूपं सिध्यतीत्याह—ऐकपद्यमित्यादि ॥

खट्वा क्षेपे ॥ स चेत्यादि। एवकारेण वाक्यार्थतां क्षेपस्य निरस्यति। स्यादेतत्—वाक्यार्थोऽपि क्षेपः, तेन वाक्यमपि भविष्यतीत्याह—न हीत्यादि। वाक्येन हि क्रियाकारकसम्बन्धमात्रं गम्यते, न तु क्षेपः। खट्वारोहणञ्चेत्यादि। विरुद्धो मार्गः=विमार्गः, तेन प्रस्थानम्=गमनम्। अधीत्य स्नात्वा गुरुणाभ्यनुज्ञातेन खट्वा रोढव्या। यत् त्वन्यथा खट्वारोहणं तद् विमार्गप्रस्थानम्, न तु खट्वारोहणमेव। इह च 'खट्वारूढः' इत्यादौ खट्वारोहणं विमार्गप्रस्थानस्योपलक्षणं वेदितव्यम्। किं पुनः कारणमेवं विज्ञायत इत्याह—सर्व एवेत्यादि। आरूढ इत्याङ्पूर्वस्य रुहेः क्तप्रत्यये ढत्वधत्वष्टुत्वढलोपदीर्घेषु कृतेषु रूपम्। जाल्म इत्ययुक्तकारीत्यर्थः ॥

खट्वारूढ इत्युच्यते । खट्वारूढो जाल्मः । खट्वाप्लुतः । अपथ-प्रस्थित इत्यर्थः ।

क्षेप इति किम् ? खट्वामारूढः ॥

सामि ॥ २७ ॥

'सामि' इत्येतदव्ययमर्द्धशब्दपर्यायः, तस्यासत्त्ववाचित्वाद् द्वितीयया नास्ति संबन्धः । तत् सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । सामिकृतम् । सामिपीतम् । सामिभुक्तम् । ऐकपद्य-मैकस्वर्यं च समासत्वाद्भवति ॥

कालाः ॥ २८ ॥

'द्वितीया' 'क्तेन' इति वर्तते । कालवाचिनः शब्दा द्वितीयान्ताः क्तान्तेन सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति । अनत्यन्तसंयोगार्थं वचनम् । 'कालाः' इति न स्वरूपविधिः । षण्मुहूर्त्ता-श्चराचराः, ते कदाचिदहर्गच्छन्ति, कदाचिद्रात्रिम् । अहरतिसृता

पदमञ्जरी

रोढव्या । यत्त्वन्यथा खट्वारोहणं तद्विमार्गप्रस्थानम् । तच्चोदाहरणमन्यस्याप्ये-वंविधस्योपलक्षणम्, तेन खट्वामारोहतु मा वाऽरुक्षद्विमार्गप्रस्थितः खट्वारूढ इत्युच्यत इत्यर्थः ।

*सामि* ॥ *तस्यासत्त्ववाचित्वादिति* । द्रव्याधारा हि कर्मशक्तिः; अतो द्रव्य-वाचिन एव द्वितीया भवति, नाद्रव्यवाचिन इत्यर्थः ॥

*कालाः* ॥ इह 'काला अत्यन्तसंयोगे' इत्येको योगः कर्त्तव्यः, तत्र 'क्तेन' इत्यस्य निवृत्तत्वात्सर्वत्र समासः सिद्ध्यति, किमर्थं योगविभागे क्तान्तेन समासो विधीयत इत्यत आह—*अनत्यन्तसंयोगार्थं वचनमिति* । अनत्यन्तसंयोगमेव दर्शयति—*षण्मुहूर्त्ता इति* । *चराचरा इति* । चरेः पचाद्यचि 'चरिचलिपतिवदीना-मुपसंख्यानमाक् चाभ्यासस्य' इति द्विर्वचनमागागमश्चाभ्यासस्येति । चरन्तोऽनव-स्थिता इत्यर्थः । *कदाचिदहरिति* । उत्तरायणे । *कदाचिद्रात्रिमिति* । दक्षिणायने ।

न्यासः

सामि ॥ असत्त्ववाचित्वादिति । द्रव्याधारा हि कर्मशक्तिः । अतो द्रव्यवाचिन एव द्वितीयया सम्बन्धो भवति, नासत्त्ववाचिनः ।

कालाः ॥ चराचरा इति । अनत्यन्तसंयोगप्रतिपादनार्थम् । चरन्ति भ्रमन्तीति

मुहूर्त्ताः अहस्संक्रान्ताः । रात्र्यतिसृता मुहूर्त्ताः रात्रिसंक्रान्ताः । मासप्रमितश्चन्द्रमाः । मासं प्रमातुमारब्धः प्रतिपच्चन्द्रमा इत्यर्थः ॥

## अत्यन्तसंयोगे च ॥ २९ ॥

'कालाः' इति वर्तते, 'क्तेन' इति निवृत्तम्। अत्यन्तसंयोगः = कृत्स्नसंयोगः, कालस्य स्वेन सम्बन्धिना व्याप्तिः। कालवाचिनः शब्दा द्वितीयान्ता अत्यन्तसंयोगे गम्यमाने सुपा सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति। मुहूर्त्तं सुखम् मुहूर्त्तसुखम्। सर्वरात्रकल्याणी । सर्वरात्रशोभना ॥

## तृतीया तत्कृतार्थेन गुणवचनेन ॥ ३० ॥

### पदमञ्जरी

वतस्तैश्च षड्भिर्मुहूर्त्तैरह्नो रात्रेश्च नास्त्यत्यन्तसंयोगः। *मासप्रमित इति*। माङ आदिकर्मणि कर्त्तरि क्तः, मासं परिच्छेत्तुमारब्धवानित्यर्थः। *प्रतिपच्चन्द्रमा इति*। न च तेन मासस्यात्यन्तसंयोग इति भावः॥

*तृतीया तत्कृतार्थेन गुणवचनेन* ॥ तृतीयायाश्छान्दसे लुकि 'गुणवचनेन'

### न्यासः

चराचराः, अनवस्थिता इत्यर्थः। 'चरिचलिपतिवदीनामच्याक्चाभ्यासस्य' इति चरेः पचाद्यचि द्विर्वचनमभ्यासस्याक्चागमश्च। कदाचिदहर्गच्छन्तीत्युत्तरायणे। कदाचिद्रात्रिमिति दक्षिणायने। एतेन तदेवानवस्थितत्वं व्यक्तीकुर्वन्नह्नो रात्रेश्च तैर्मुहूर्त्तैरनत्यन्तसंयोगमाचष्टे। **अहरतिसृता इति**। 'रोऽसुपि' इत्यह्नो नकारस्य रेफः। **अहःसंक्रान्ता इति**। 'क्रमु पादविक्षेपे', पूर्ववदिट्प्रतिषेधः। 'अनुनासिकस्य क्विझलोः' इति दीर्घः। **मासप्रमित इति**। 'माङ् माने' 'आदिकर्मणि कर्त्तरि च' इति कर्त्तरि निष्ठा। 'द्यतिस्यति' इत्यादिनेत्त्वम्। **मासं प्रमातुमारब्ध इति**। मासस्यैकदेशस्य प्रतिपदश्चन्द्रमसा योगं दर्शयन् मासस्य तेनानत्यसंयोगमाचष्टे। कालस्य हि कृत्स्नस्य स्वेन सम्बन्धिना व्याप्तिः=त्यन्तसंयोगः। न च प्रतिपच्चद्रमसा मासस्येह व्याप्तिः=संयोगोऽस्तीति नेहात्यन्तसंयोगः।

**अत्यन्तसंयोगे च** ॥ **कृत्स्नसंयोग इति**। कृत्स्नस्य सकलस्य संयोगः कृतस्नसंयोगः, कृत्स्नस्य कालस्य मुहूर्त्तादेः स्वेन सम्बन्धिना=सुखादिना संयोगः=सम्बन्धोऽत्यन्तसंयोगः। एतदेव स्पष्टीकर्तुमाह—कालस्येत्यादि। **मुहूर्त्तं सुखमिति**। 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। अत्र मुहूर्त्तस्य कालस्य स्वेन सम्बन्धिना सुखेन व्याप्तिः ॥

**तृतीया तत्कृतार्थेन गुणवचनेन** ॥ **तत्कृतेति** एतदर्थशब्देनासमस्तमेव, अवि-

'सुप्' 'सुपा' इति वर्त्तते, तस्य विशेषणमेतत्तृतीया। तृतीयान्तं सुबन्तं गुणवचनेनार्थशब्देन च सह समस्यते, तत्पुरुषश्च समासो भवति। कीदृशेन गुणवचनेन ? तत्कृतेन = तदर्थकृतेन; तृतीयान्तार्थकृतेनेति यावत्। शङ्कुलया खण्डः शङ्कुलाखण्डः। किरिणा काणः किरिकाणः।

पदमञ्जरी

इत्यनेन सामानाधिकरण्यम्। अर्थेनेति पृथक् पदम्, अत एव *गुणवचनेनार्थशब्देन चेति। कीदृशेन गुणवचनेन? तत्कृतेनेति*। तदिति सर्वनाम्ना प्रकृतस्य तृतीयान्तस्य प्रत्यवमर्शः, स च शब्दः। न च शब्देन गुणवचनस्य करणं सम्भवतीत्यतः सामर्थ्यात्तदर्थकृतेनेति विज्ञायत इत्याह—*तृतीयान्तार्थकृतेनेति*। *यावदिति*। यावच्छब्दो निपातस्तात्पर्यपर्यायतां दर्शयति। अर्थद्वारकं चेदं गुणवचनस्य विशेषणम्, अर्थ एव हि तृतीयार्थेन क्रियते, न गुणवचनः शब्दः। [वचनग्रहणं किम्, यावतार्थेन समासासम्भवाद् गुणवचनेनैव भविष्यति ? एवं यथा विज्ञायेत— गुणमुक्तवान् गुणवचनः, 'कृत्यल्युटो बहुलम्' इति भूते कर्त्तरि ल्युट्; गुणमुक्तवता संप्रति गुणोपसर्जनद्रव्यवचनेनेत्यर्थः। तेन घृतेन पाटवमिति गुणमात्रनिष्ठे न भवति। गुणश्चात्र 'सत्त्वे निविशतेऽपैति' इति लक्षितो गृह्यते, न तु यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेश इति तच्छब्दप्रवृत्तिनिमित्तम्; तृतीयान्तार्थकृते सर्वत्रैव तस्य भावात्। *शंकुलाखण्डः, किरिकाण इति*। 'खडि भेदने', 'कण

न्यासः

भक्तिकश्च। तृतीयाविभक्तेः 'सुपां सुलुक्' इति लुप्तत्वात्। एतच्च गुणवचनेनेत्यस्य समानाधिकरणं विशेषणम्। अत एव कीदृशेनेति पृष्ट सन्नाह—तत्कृतेनेति। तदिति सर्वनाम्ना प्रकृतस्य तृतीयान्तस्य प्रत्यवमर्श इति तृतीयान्तकृतेनेति दर्शयति। तृतीयान्तेन गुणवचनस्य करणत्वं न सम्भवतीत्यतः सामर्थ्यात् तदर्थकृतेनेति विज्ञायत इत्यत आह—तृतीयान्तार्थकृतेनेति यावदिति। अर्थद्वारेण चेदं गुणवचनस्य विशेषणं वेदितव्यम्—तृतीयान्तार्थकृतो गुणवचनार्थ इति। सोऽपि तथोच्यते। एतदुक्तं भवति—तृतीयान्तार्थकृतेन गुणवचनार्थेनेति। अर्थ एव हि तृतीयान्तार्थेन क्रियते, न च गुणवचनशब्दः। गुणमुक्तवान् = गुणवचनः। 'कृत्यल्युटो बहुलम्' इति कर्त्तरि ल्युट्। अथ वा—करणे, गुण उक्तोऽनेनेति गुणवचनः। यश्च पूर्वं गुणे वर्त्तित्वा पश्चात् तद्वति द्रव्ये वर्त्तते स गुणवचनः। गुणेनेत्युच्यमाने घृतेन पाटवमित्यादौ प्रसङ्गः, अतस्तन्निवृत्त्यर्थं वचनग्रहणम्। तस्मिंश्च सति गुणे वर्त्तित्वा तद्वति द्रव्ये यो वर्त्तते तेनैव समासो भवति, न तु गुण एव यो वर्त्तते तेन सह। न च पाटवादयः शब्दाः पूर्वं गुणे वर्त्तित्वा पश्चात् तद्वति द्रव्ये वर्त्तन्ते, अपि तु गुण एव। वचनग्रहणात् तैः सह समासो न भवति। शङ्कुलाखण्डः, किरिकाण इति। खण्डकाणशब्दावत्र

अर्थशब्देन—धान्येनार्थः, धान्यार्थः ।

तत्कृतेनेति किम् ? अक्ष्णा काणः । गुणवचनेति किम् ? गोभिर्वपावान् ॥

पदमञ्जरी

निमीलने'—इत्याभ्यां घञि व्युत्पादितावेतौ क्रियारूपापन्ने गुणे वर्त्तित्वान्मतुब्लोपादभेदोपचाराद्वा तद्वति द्रव्ये वर्त्तेते इति गुणवचनौ भवतः । *धान्येनार्थ इति* । अर्थ्यत इत्यर्थः=प्रयोजनम्, अर्थनं वार्थः = प्रार्थना, अभिलाषः । सर्वत्र करणे तृतीयायाः समासः ।

*अक्ष्णा काण इति* । नात्राक्ष्णा कृतं काणत्वम्, किं तर्हि ? अन्येनैव केनापि क्रियादिना, अक्ष्णा तु केवलं काणो लक्ष्यत इति तत्कृतत्वाभावः । किं च दध्ना पटुरित्यत्र मा भूदित्येवमर्थमपि तत्कृतग्रहणं कर्त्तव्यम् । ननु यदि दधिकृतं पाटवं विवक्षितम्—दध्ना कृतः पटुरिति, ततो भवितव्यमेव समासेन; अथ भोजनाद्यपेक्षो दध्नः करणभावः—दध्ना भुङ्क्ते पटुरिति, ततोऽसामर्थ्यादेव न भविष्यति ? इहापि तर्हि न स्यात्—कुंकुमेन लोहितं कोपेन लोहितं मुखमिति, अत्रापि हि करोतिक्रियया करणस्य सम्बन्धः—कुंकुमेन कृतं लोहितमिति । क्व तर्हि स्यात् ? शंकुलया खण्ड इत्यादावेव तु स्यात्, यत्र पूर्वोत्तरपदयोः क्रियाकारकलक्षणः सम्बन्धः । तस्माद्यत्रोत्तरपदे क्रिया न गम्यते तत्रापि तत्कृतत्वे सति यथा स्याद्भोजनादिद्वारके सामर्थ्ये मा भूदिति तत्कृतग्रहणम् । *गुणवचनेनेति किमिति* । जातिवचनेषु जातेर्नित्यत्वात्तत्कृतस्यासम्भवः । क्रियावचने त्विष्यत एव । 'कर्तृकरणे कृता बहुलम्' इति द्रव्यवाचिष्वपि तत्कृतस्यासम्भव एव । न ह्याकाशस्य तत्त्वं केनचित् क्रियते, अतो गुणवचनेनैव भविष्यतीति प्रश्नः । *गोभिर्वपावानिति* । गोसम्बन्धिदध्याद्युपयोगादेव तस्य वपावत्त्वं पीवरत्वमित्यस्ति तत्कृतत्वम्, न त्वसौ गुणवचनः ॥

न्यासः

खण्डने निमीलने च क्रियारूपापन्ने गुणे वर्त्तित्वा पश्चान्मतुब्लोपादभेदोपचाराद् वा तद्वति द्रव्ये वर्त्तेते इति गुणवचनौ भवतः । धान्यार्थ इति । भवत्ययमर्थशब्दस्तत्कृतः, न तु गुणवचन इति पृथगस्योपादानं क्रियते । अर्थशब्दश्चायं प्रयोजनवाची, यथा—किमर्थमागतोऽसीत्यभिहिते केन प्रयोजनेनेत्यवगम्यते । अभिधेयवचन इत्यन्ये । सर्वत्र करणे तृतीया ।

**अक्ष्णा काण** इति । अङ्गविकारलक्षणे 'येनाङ्गविकारः' इति तृतीया । नात्र तृतीयान्तेनाक्ष्णा देवदत्तस्य काणत्वं कृतम् । किं तर्हि ? अन्येन केनापि । अक्ष्णा तु केवलं काणत्वयुक्तो देवदत्तो लक्ष्यते । गोभिर्वपावानिति । वपा अस्य सन्तीति

## पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ ३१ ॥

पूर्व, सदृश, सम, ऊनार्थ, कलह, निपुण, मिश्र, श्लक्ष्ण—एतैः सह तृतीयान्तं समस्यते, तत्पुरुषश्च समासो भवति। अस्मादेव वचनात् पूर्वादिभिर्योगे तृतीया भवति, हेतौ वा द्रष्टव्या। पूर्व—मासेन पूर्वः मासपूर्वः, संवत्सरपूर्वः। सदृश—मातृसदृशः, पितृसदृशः। सम—मातृसमः, पितृसमः। ऊनार्थ—माषोनम्, कार्षापणोनम्।

### पदमञ्जरी

पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ पूर्वसूत्रेऽर्थशब्देन समासस्य साधितत्वादिहार्थग्रहणमर्थनिर्देशार्थम्। तच्चानन्तरेणोनशब्देनैव सम्बध्यते, न पूर्वादिभिः; समसदृशशब्दयोः पृथगुपादानात्।एतस्मादेवेत्या।दसमसदृशशब्दाभ्या-मन्यत्रेदं तद्योगे तुल्यार्थैरिति तृतीयास्ति। इह तुल्यार्थयोगे षष्ठ्यपि पक्षे विधीयते, ततस्तस्याः समासे मातुः सदृशो मातृसदृश इति सिद्धम्, किमर्थमिह सदृश-ग्रहणम्? 'तत्पुरुषे तुल्यार्थतृतीया' इति पूर्वपदप्रकृतिस्वरो यथा स्यात्, सिद्धोऽत्र प्रकृतिस्वरः—'सदृशप्रतिरूपयोः सादृश्ये' इति। तच्च तत्र सदृशग्रहणमवश्यं कर्त्तव्यम्, यदा षष्ठीसमासस्तदान्तोदात्तत्वं मा भूदिति। ननु चेदानीमनभिधानात् षष्ठीसमासो न भविष्यति? नैवं शक्यम्, अलुक्समासे हि दोषः स्यात्, 'षष्ठ्या आक्रोशे'—दास्याः सदृशः, वृषल्याः सदृश इति, तस्मात्तत्कर्तव्यम्, इदं तु न कर्त्तव्यम्? इदमपि कर्त्तव्यम्, हेतुतृतीयार्थं विद्यया हेतुना सदृशो विद्यासदृश इति, न ह्यत्र 'तुल्यार्थैः' इति षष्ठी भवति, प्रतियोगिन्येव हि सा विधीयते। एवमपि न कर्त्तव्यम्—तत्कृतत्वात्पूर्वेणैव सिद्धम्, यो हि विद्यया सदृशः, विद्याकृतं हि तत्सादृश्यम्, तत्र पूर्वेणैव सिद्धम्। 'मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम्' गुड-संमिश्रा धाना इत्येवमर्थम्? ज्ञापकात्सिद्धम्, यदयं 'मिश्रं चानुपसर्गमसन्धौ' इत्य-नुपसर्गग्रहणं करोति, तज्ज्ञापयति—मिश्रग्रहणे सोपसर्गस्यापि ग्रहणमिति।

### न्यासः

वपावान्। भवति वपावान् देवदत्तस्तृतीयान्तार्थकृतः, तथा हि स गोभिर्वपावान् कृतः। न तु वपावानित्ययं शब्दो गुणमुक्तवानिति न गुणवचनः, ततस्तेन सह समासो न भवति॥

**पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः** ॥ युक्तः समसदृशशब्दाभ्यां समासः, यावता ताभ्यां योगे 'तुल्यार्थैरतुलोपमाभ्याम्' इति तृतीयाविधानम्; इतरैस्तु पूर्वा-दिभिः कथं तृतीयासमास उपपद्यते, न हि तद्योगे केनचित् तृतीया विहिता इत्याह—**अस्मादेवेत्यादि**। सुबोधम्।

माषविकलम्, कार्षापणविकलम्। कलह--असिकलहः, वाक्कलहः। निपुण---वाग्निपुणः, आचारनिपुणः। मिश्र--गुडमिश्रः, तिलमिश्रः। श्लक्ष्ण---आचारश्लक्ष्णः॥

* पूर्वादिष्ववरस्योपसंख्यानम् * । मासेनावरः मासावरः। संवत्सरावरः॥

कर्तृकरणे कृता बहुलम् ॥ ३२ ॥

'तृतीया' इति वर्तते। कर्तरि करणे च या तृतीया तदन्तं कृदन्तेन सह समस्यते बहुलम्, तत्पुरुषश्च समासो भवति। सर्वोपाधिव्यभिचारार्थं बहुलग्रहणम्। कर्तरि---अहिना हतः अहिहतः। करणे---नखैर्निर्भिन्नो नखनिर्भिन्नः। परशुना छिन्नः परशुच्छिन्नः।

कर्तृकरणे इति किम्? भिक्षाभिरुषितः। बहुलग्रहणं किम्? दात्रेण धान्यं लूनवान्, परशुना छिन्नवान्--इह समासो न भवतिः पादहारकः, गलेचोपक इति च भवति॥

पदमञ्जरी

*पूर्वादिष्विति*। अवरशब्दोऽपि सूत्रे पठितव्य इत्यर्थः॥

*कर्तृकरणे कृता बहुलम्*॥ 'कर्तृकरणे' इति प्रथमाद्विवचनम्। वृत्तौ वस्तुव्याख्यानं कृतम्—कर्त्तरि करणे च या तृतीयेति। तथा चोत्तरत्र वक्ष्यति—'कर्तृकरणे कृत्यैः सहाधिकार्थवचने समस्येते' इति। *सर्वोपाधिव्यभिचारार्थमिति*। अव्याप्त्यतिव्याप्तिपरिहारार्थमित्यर्थः।

न्यासः

**पूर्वादिष्ववरस्योपसंख्यानमिति**। पूर्वादिषु समासकारणत्वेनोपात्तेषु सत्स्ववरशब्दस्योपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः। अवरशब्देनापि तृतीयासमासः प्रतिपाद्यत इत्यर्थः। तत्रेदं प्रतिपादनम्—उत्तरसूत्रे बहुलग्रहणं क्रियते, तेनावरशब्देनापि समासो भवति॥

**कर्तृकरणे कृता बहुलम्**॥ **भिक्षाभिरुषित इति**। हेतौ तृतीया विहिता। वसेर्वच्यादिसूत्रेण संप्रसारणम्, 'शासिवसिघसीनाञ्च' इति षत्वम्, 'वसतिक्षुधोः' इतीट्। **दात्रेण धान्यं लूनवानिति**। 'ल्वादिभ्यश्च' इति निष्ठानत्वम्। **पादहारक इति**। पादाभ्यां ह्रियत इति पादहारकः। पादाभ्यामिति पञ्चमी चतुर्थी वा। हारक इति 'कृत्यल्युटो बहुलम्' इति कर्मणि ण्वुल्। **गलेचोपक इति**। गले चुप्यत इति। 'चुप

## कृत्यैरधिकार्थवचने ॥ ३३ ॥

स्तुतिनिन्दाप्रयुक्तमध्यारोपितार्थवचनमधिकार्थवचनम् । कर्तृकरणे कृत्यैः सह समस्येतेऽधिकार्थवचने गम्यमाने विभाषा तत्पुरुषश्च समासो भवति । कर्त्ता—काकपेया नदी । श्वलेह्यः कूपः । करणम्—बाष्पच्छेद्यानि तृणानि । कण्टक-

पदमञ्जरी

*पादहारक इति* । ह्रियत इति हारक इति 'कृत्यल्युटो बहुलम्' इति कर्मणि ण्वुल्, पादाभ्यामित्यपादानपञ्चम्यन्तस्य समासः । *गले चोपक इति* । 'चुप मन्दायां गतौ', हेतुमण्णिजन्तात्कर्मणि ण्वुल्, 'अमूर्द्धमस्तकात्' इत्यलुक् । कृद्ग्रहणमनर्थकम्; अन्यस्याभावात् । इह कर्तृकरणं क्रियाया एव भवतः, क्रिया च धातुवाच्या, धातोश्च द्वये प्रत्ययाः—कृतस्तिङश्च । तत्र सुपेत्यधिकारात्तिङन्ते न प्रसङ्गः । तद्धितनिवृत्यर्थं तु—इह काष्ठैः पचतितराम्, काष्ठैः पचतिरूपम्, काष्ठैः पचतिदेश्यम्, हस्तेन कृतपूर्वी, दध्ना भुक्तपूर्वी, घृतेनेष्टीति ॥

*कृत्यैरधिकार्थवचने* ॥ *स्तुतिनिन्दाप्रयुक्तमिति* । स्तुत्या निन्दया च प्रवर्त्तितं स्तोतुं निन्दितुं च कृतमित्यर्थः । *अध्यारोपितार्थवचनमिति* । असन्नेवारोपितोऽध्यारोपितः । *काकपेयेति* । एवं नाम पूर्णतोया नदी यत्तटस्थैः काकैरपि शक्या पातुमिति स्तुतिः; एवं नामाल्पतोया यत्काकैरपि शक्या पातुमिति निन्दा; उभयत्र शक्यार्थे कृत्यः । *श्वलेह्य इति* । एवं नामासन्नतोयः कूपस्तटस्थैरपि श्वभिः शक्यो लेढुमिति स्तुतिः; एवं नामाशुचिः कूपो यज्जलं श्वान एव लेढुमर्हन्तीति निन्दा; अर्हार्थे कृत्यः । *बाष्पच्छेद्यानीति* । एवं नाम कोमलानि तृणानि यद्वाष्पे-

न्यासः

मन्दायां गतौ' इत्यस्मात् पूर्ववदेव ण्वुल् । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् ॥

**कृत्यैरधिकार्थवचने** ॥ **स्तुतिनिन्दाप्रयुक्तमिति** । स्तुत्या निन्दया वा यत् प्रयुक्तं प्रवर्त्तितं तत् स्तुतिनिन्दाप्रयुक्तम् । तदर्थमुच्चारितमित्यर्थः । **अध्यारोपितार्थवचनमिति** । अध्यारोपितोऽर्थोऽसन्नेव बुद्धया समारोपितस्तस्य वचनमिति षष्ठीसमासः । **कर्त्तृकरण इति** । अर्थे कार्यासम्भवात् तदभिधायिनि सुबन्ते कार्यं विज्ञायते । **काकपेयेति** । 'पा पाने' इति 'अचो यत्' 'ईद् यति' ईत्त्वम् । अत्र सम्पूर्णतोयत्वोद्भावनं नद्याः स्तुतिः, अध्यारोपितः पुनरत्रार्थः काकपेयत्वम्—एवं नाम सम्पूर्णतोया नदी यत् तटस्थैरपि काकैः शक्या पातुम् । **श्वलेह्यः कूप इति** । 'ऋहलोर्ण्यत्' अत्राप्यासन्नोदकत्वोद्भावनं कूपस्य स्तुतिः । अध्यारोपितः पुनरत्रार्थः श्वलेह्यत्वम्—एवं नामासन्नोदकः कूपो यतः श्वभिरपि लिह्यते । **बाष्पच्छेद्यानि तृणानीति** । अत्र मार्द-

सञ्चेय ओदनः। पूर्वस्यैवायं प्रपञ्चः।

* कृत्यग्रहणे यण्ण्यतोर्ग्रहणं कर्त्तव्यम् *। इह मा भूत्–काकैः पातव्या इति ॥

### अन्नेन व्यञ्जनम् ॥ ३४ ॥

'तृतीया' इति वर्तते। व्यञ्जनवाचि तृतीयान्तमन्नवाचिना

**पदमञ्जरी**

णापि छेत्तुं शक्यानीति स्तुतिः; एवं नाम क्वथितानि तृणानि यद्वाष्पेणापि छेत्तुं शक्यानीति निन्दा। *कण्टकसंचेय इति*। एवं नाम क्लिन्न ओदनो यत्कण्टकैः शक्यः संचेतुमिति स्तुतिः; एवं नामाल्प ओदनो यत्कण्टकैः संचीयत इति निन्दा। *पूर्वस्यैवायं प्रपञ्च इति*। यद्यपि स्तुतिनिन्दापरत्वात्क्रियोपादानस्य कर्तृकरणयोर्गौणत्वम्, तथापि बहुलवचनात्पूर्वेणैव सिद्धम्, तथा च काकपीता नदीत्यत्राकृत्यैरप्यधिकार्थवचनैः समासो दृश्यते, अतः प्रपञ्च एवायम्, नाप्राप्तविधिः, नापि नियम इत्यर्थः॥

*अन्नेन व्यञ्जनम्*॥ दध्योदन *इति*। ननु च :नेह क्रिया श्रूयते, न चान्तरेण

**न्यासः**

वातिशयोद्भावनं तृणानां स्तुतिः। अध्यारोपितः पुनरत्रार्थो वाष्पच्छेद्यता—एवं नाम मृदूनि तृणानि यद्वाष्पेणापि शक्यानि छेत्तुम्। **कण्टकसञ्चेय ओदन इति**। अत्रापि वैषद्यातिशयोद्भावनं विक्लिन्नतोद्भावनञ्चौदनस्य स्तुतिः। अध्यारोपितः पुनरत्रार्थः कण्टकसञ्चेयत्वम्—एवं नामौदनस्य विशदतातिशयो विक्लेदश्च यत् कण्टके नापि शक्यः सञ्चेतुम्। एवं तावत् स्तुतिप्रयुक्तेऽधिकार्थवचन उदाहरणानि।

निन्दाप्रयुक्तेऽधिकार्थवचन एतावन्त्येव द्रष्टव्यानि। तथा हि—**काकपेया नदी**त्यत्राल्पतोयत्वोद्भावनं नद्या निन्दा। अध्यारोपितः पुनरत्रार्थस्तदेव पूर्वोक्त काकपेयत्वम्, एवं श्वलेह्यादावपि पूर्वोक्त एवाध्यारोपितोऽर्थो द्रष्टव्यः—एवं नामाल्पतोया नदी यत् काकैरपि शक्यं पातुमिति। **श्वलेह्यः कूप** इत्यत्राप्यशुद्धतोयत्वोद्भवनं निन्दा—एवं नामाशुचिः कूपो यत् श्वभिरपि लिह्यत इति। **वाष्पच्छेद्यानि तृणानीति**। क्वथितत्वोद्भावनं निन्दा—एवं नाम क्वथितानि तृणानि यद् वाष्पेणापि च्छिद्यन्ते। **कण्टकसञ्चेय ओदन इति**। अल्पतोद्भावनं निन्दा—एवं नामाल्प ओदनो यत् कण्टकैरपि चीयत इति। ननु च बहुलवचनादधिकार्थेऽपि पूर्वेणैव सिद्धः समासः, तत् किमर्थमिदमित्याह—**पूर्वस्येत्यादि**। ते वै विधयः सुसंगृहीता येषां लक्षणं प्रपञ्चश्चेति। सुसंगृहीतं यथा स्यादिति पूर्वस्यायं प्रपञ्चः क्रियते॥

**अन्नेन व्यञ्जनम्**॥ दध्योदन **इति**। ननु च क्रियाकृतः कारकाणां सम्बन्धः,

सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति। संस्कार्यं-मन्नम्, संस्कारकं व्यञ्जनम्। दध्ना उपसिक्त ओदनः दध्योदनः। क्षीरौदनः। वृत्तौ क्रियाया अन्तर्भावादन्नव्यञ्जनयोः सामर्थ्यम् ॥

भक्ष्येण मिश्रीकरणम् ॥ ३५ ॥

मिश्रीकरणवाचि तृतीयान्तं भक्ष्यवाचिना सुबन्तेन समस्यते, तत्पुरुषश्च समासो भवति। खरविशदमभ्यवहार्यं भक्ष्यम्, तस्य संस्कारकं मिश्रीकरणम्। गुडेन मिश्रा धानाः गुडधानाः। गुड-पृथुकाः। वृत्तौ क्रियाया अन्तर्भावात्पूर्वोत्तरपदयोः सामर्थ्यम् ॥

चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ ३६ ॥

'सुप्' 'सुपा' इति वर्तते, तस्य विशेषणमेतच्चतुर्थी। 'तत्' इति

पदमञ्जरी

क्रियां द्रव्याणां परस्परेण सम्बन्ध इत्यसामर्थ्यादत्र समासो न प्राप्नोति, अथा-सत्यपि सामर्थ्ये वचनात्समासः? इहापि तर्हि स्यात्—किं दध्ना, ओदनो भुज्यता-मिति, तत्राह—*वृत्तौ क्रियाया अन्तर्भावादिति*। स्वभावादेव वृत्तावन्तर्भूता क्रियेति तद्द्वारकस्य सम्बन्धस्य सद्भावात्सामर्थ्यमित्यर्थः ॥

*भक्ष्येण मिश्रीकरणम्* ॥ *खरविशदमिति*। खरम्=कठिनम्, विभक्तावयवम्; खरं च तद्विशदं च खरविशदम्, हनुचलनेनादनीयमित्यर्थः। एवम्भूतं यदभ्यवहार्यं तद्भक्ष्यमित्युच्यते; तत्रैव यदन्तस्य एरजन्तस्य च भक्षयते रूढत्वात्। भक्षयति-स्त्वन्यत्रापि भवति—अब्भक्षः, वायुभक्ष इति। गौणोऽत्र भक्षयतिरित्यन्ये ॥

*चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः* ॥ *अर्थः परामृश्यत इति*। यद्यपि चतुर्थीति

न्यासः

न तु स्वतः। न च वृत्ताविह काचन क्रिया श्रूयत इति सामर्थ्याभावः। असति च सामर्थ्ये समासाभावः। अथासत्यपि सामर्थ्ये वचनसामर्थ्यात् समासो भवतीति चेदास्यतां दध्ना, ओदनो भुज्यतां देवदत्तेनेत्यत्रापि स्यादित्यत आह—**वृत्तावित्यादि**। न ह्यसत्यामुपसेचनक्रियायां संस्कार्यं संस्कारकं वा सम्भवति। अस्ति चेह तदुभय-मित्यतस्तद्भावादेव समासान्तर्भूता क्रिया गम्यते। तद्द्वारकश्चान्नव्यञ्जनयोः सम्बन्ध इति विद्यत एव सामर्थ्यम् ॥

**भक्ष्येण मिश्रीकरणम्** ॥ **मिश्रीकरणमिति**। अमिश्रं मिश्रं क्रियतेऽनेनेति मिश्री-करणम्। **खरविशदमभ्यवहार्यं भक्ष्यमिति**। तत्रैव भक्ष्यशब्दस्य रूढत्वात् ॥

**चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** ॥ **तदर्थेनेत्यादि**। यदि तादर्थ्यमात्रे समासः

सर्वनाम्ना चतुर्थ्यन्तस्यार्थः परामृश्यते । तस्मै इदं तदर्थम् । तदर्थ, अर्थ, बलि, हित, सुख, रक्षित—इत्येतैः सह चतुर्थ्यन्तं समस्यते, तत्पुरुषश्च समासो भवति । तदर्थेन प्रकृतिविकारभावे समासोऽयमिष्यते । यूपाय दारु यूपदारु । कुण्डलाय हिरण्यम्, कुण्डलहिरण्यम् ।

इह न भवति—रन्धनाय स्थाली, अवहननायोलूखलमिति । चतुर्थी चास्मादेव ज्ञापकात्तादर्थ्ये भवति ॥

पदमञ्जरी

चतुर्थ्यन्तः शब्दः सन्निहितः, तथापि शब्दं प्रति तादर्थ्यासम्भवात्तदर्थ एव परामृश्यते इत्यर्थः । *इत्येतैः शब्दैः सहेति* । तत्र तदर्थेन सुबन्तेनेत्यर्थद्वारकं विशेषणम्, स्वरूपेण सुबन्तस्य तादर्थ्यासम्भवात् । द्वितीयस्त्वर्थशब्दः पृथगेव निमित्तम् । *प्रकृतिविकारभावे समास इष्यत इति* । ज्ञापकात् । यदयं बलिरक्षितग्रहणं करोति तज्ज्ञापयति- विकृतिश्चतुर्थ्यन्ता प्रकृत्या समस्यत इति; अन्यथा कुबेरबलिः, गोरक्षितमित्यत्रापि तादर्थ्यसम्भवादनर्थकं तत्स्यात् । हितसुखग्रहणं तु 'हितयोगे चतुर्थी वक्तव्या', 'चतुर्थी चाशिषि' इत्यतादर्थ्येऽपि चतुर्थीसम्भवान्न ज्ञापकम् । यदि विकृतिः प्रकृत्या समस्यते–अश्वेभ्यो घासः, अश्वेभ्यः सुरा ऽश्वसुरम्, 'विभाषासेना' इति नपुंसकत्वम्, हस्तिभ्यो विधा हस्तिविधा, विधा = अन्नविशेषः; अत्र न प्राप्नोति ? अश्वघासादयः षष्ठीसमासा भविष्यन्ति । ननु स्वरे विशेषो भवति– चतुर्थीसमासे हि सति 'चतुर्थी तदर्थ' इति पूर्वपदप्रकृतिस्वरेण भाव्यम्, षष्ठीसमासे तु समासान्तोदात्तत्वेन ? नैषोऽस्ति विशेषः; चतुर्थीसमासेऽपि नैव पूर्वपदप्रकृतिस्वरेण भाव्यम्; ज्ञापकात्, यदयं 'क्ते च' इति चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवतीत्याह, तज्ज्ञापयति–प्रकृतिविकारभावाभाव एष स्वरो न भवतीति; अन्यथा

न्यासः

स्यात्, बलिरक्षितग्रहणमनर्थकं स्यात् । तथा हि—कुबेरबलिः, गोरक्षितमित्यत्रापि तादर्थ्यं गम्यत एव । तस्माद् बलिरक्षितग्रहणाल्लिङ्गात् 'तादर्थ्ये प्रकृतिविकारभावे समासो भवति' इति विज्ञायते । ननु च सम्प्रदाने चतुर्थ्यर्थं बलिरक्षितग्रहणं स्यात्, नैतदस्ति; ददातिकर्मणा हि अभिप्रेयमाणस्य क्रियया वा सम्प्रदानसंज्ञेष्यते, न चेह ददातिकर्मणा क्रियया वाऽभिप्रेयमाणतास्ति, तत् कुतः सम्प्रदाने चतुर्थी ? केन पुनस्तादर्थ्ये चतुर्थी भवतीत्याह—अस्मादेवेत्यादि । यदि तादर्थ्ये चतुर्थी न स्यात्, तदा तदर्थग्रहणमनर्थकं स्यात् । तस्माद् यदेतत् तदर्थेन चतुर्थ्यन्तस्य समासविधानं तदेव ज्ञापकम्—तादर्थ्ये चतुर्थी भवतीति ।

* अर्थेन नित्यसमासवचनं सर्वलिङ्गता च वक्तव्या *। ब्राह्म-

पदमञ्जरी

गोरक्षितमित्यत्रापि 'चतुर्थी तदर्थ' इत्येव सिद्धेरनर्थकं तत्स्यात् । नैतदस्ति ज्ञापकम्; हितार्थमेतत्स्यात्—गोहितमित्यत्र हि तादर्थ्यं नास्ति। एवमपि 'हिते च' इति वक्तव्ये 'क्ते च' इति सामन्यवचनं ज्ञापकमेव, सर्वथा कुबेरबलिरित्यादौ मा भूदित्येवमर्थं प्रकृतिविकारभावे स्वर एषितव्यः।

अथ रन्धनाय स्थालीत्यत्र षष्ठीसमासः कस्मान्न भवति ? कश्चिदाह—भवत्येव, तद्यथा—गोग्रासः, लीलाम्बुजम्, क्रीडासरः, वासभवनम्, नाट्यशालेति। अपर आह—रन्धनस्थाल्यादयोऽनभिधानात् षष्ठीसमासा न भवन्तीति। उभावपि प्रतिब्रूमः—येषु षष्ठीसमास इष्यते तेषु चतुर्थीसमास एवास्तु, येषु तु नेष्यते तेषु तु चतुर्थीसमास एवानभिधानान्नेष्यताम्, माकारि ज्ञापनार्थं बलिरक्षितग्रहणम्, स्वरस्तु चतुर्थीसमासेऽपि पूर्वोक्तेन प्रकारेण प्रकृतिविकारभाव एव व्यवस्थास्यते। किं चैवं सति सूत्रमेवैतदनर्थकम्, यूपदार्वादावपि षष्ठीसमास एवास्तु, 'चतुर्थी तदर्थ' इत्येतत्तु 'षष्ठी तदर्थ' इति क्रियताम्, ज्ञापकाच्च स्वरस्य व्यवस्था क्रियताम्। नन्वर्थभेदो भवति—षष्ठीसमासे सम्बन्धमात्रं गम्यते, चतुर्थीसमासे तु तादर्थ्यं सम्बन्धविशेषः ? नैषोऽस्ति विशेषः, आरभ्यमाणेऽपि चतुर्थीसमासे न दण्डवारितः षष्ठीसमासः, तत्रार्थप्रकरणादिना विशेषोऽवसेयः। यद्येवम्, केवलेऽपि षष्ठीसमासे तथा विशेषोऽवगंस्यते, किञ्च सिद्धान्तेऽश्वघासादिषु तावदर्थप्रकरणादिना तादर्थ्यावसायः सर्वत्रैव तथास्तु, नार्थोऽनेन ? उच्यते—हितशब्देन तावत्षष्ठीसमासो न भवति; तद्योगे चतुर्थ्या नित्यत्वादिति चतुर्थीसमास एव वक्तव्यः। ततश्च 'क्ते च' इत्यत्रापि चतुर्थीग्रहणं कर्तव्यं गोहितमित्याद्यर्थम्। एवं च गोरक्षितमित्यत्र न स्यात्, चतुर्थ्या असम्भवात्। 'षष्ठी तदर्थ' इत्यस्य चाप्रसङ्गः, प्रकृतिविकाराभावादिति रक्षितेनापि चतुर्थीसमास एव विधेयः। अर्थशब्देनापि योगे तादर्थ्यसंबन्धविशेषस्य नियमेन प्रतीयमानत्वाच्चतुर्थ्या सम्भवितव्यमिति तेनापि चतुर्थीसमास एव कर्तव्यः। बलिसुखग्रहणमपि कर्त्तव्यम्, तादर्थ्यस्य समासे नियमेन प्रतीतिर्यथा स्यादित्येवमर्थम्। तस्मादारब्धव्यमेव सूत्रम्। प्रकृतिविकारभाव एव समास इत्यस्य तु प्रयोजनं चिन्त्यम्।

*अर्थेन नित्यसमासवचनमिति*। अन्यथा महाविभाषाधिकाराद् ब्राह्मणायार्थं

न्यासः

**अर्थेनेत्यादि**। कर्त्तव्यमिति शेषः। नित्यसमास उच्यते=कथ्यते, प्रत्याय्यते येन तन्नित्यसमासवचनं व्याख्यातव्यम्। एतदुक्तं भवति—येनार्थशब्देन नित्यसमासः प्रत्याय्यते तद्व्याख्यानं कर्त्तव्यमिति। तत्रेदं व्याख्यानम्—विभाषाग्रहणमनुवर्त्तते,

णार्थं पयः । ब्राह्मणार्था यवागूः । बलि--कुबेराय बलिः कुबेरबलिः । महाराजबलिः । हित--गोहितम् । अश्वहितम् । सुख--गोसुखम् । अश्वसुखम् । रक्षित--गोरक्षितम् । अश्वरक्षितम् ॥

पदमञ्जरी

इति वाक्यमपि स्यात् । *सर्वलिङ्गता चेति* । परलिङ्गताया अपवादः, अभिधेयवशेन च सर्वलिङ्गता न सर्वत्रेति दर्शयति । *ब्राह्मणार्थं पय इत्यादि* । सर्थबिति चेत्, इत्संज्ञाभावः, इयङुवङ्प्रसङ्गश्च । स्यादेतत्—तदर्थं विकृतेः प्रकृतावित्यत्र तदर्थे सर्थबिति सूत्रं कर्तव्यम्, चतुर्थी वर्तते, चतुर्थीसमर्थात्तदर्थेऽभिधेये सर्थप्रत्ययो भवति, सकारः पदसंज्ञार्थः–राजार्थः, गवार्थः, पित्त्वादनुदात्तत्वम्; एवं चार्थ-इति पूर्वपदप्रकृतिस्वरो न विधेयः, प्रत्ययत्वाच्च न तेन विग्रहः, तद्धितत्वाच्चा-भिधेयवल्लिङ्गता सिद्धयतीति ? तन्न; सकारस्येत्संज्ञाभावप्रसङ्गात् । अथ 'आदिर्ञि-टुडवः' ''ष्वः प्रत्ययस्य' इति द्विषकारकनिर्देशाश्रयणेनेत्संज्ञा स्याद् ? एवमपि वुञ्छणादिषु वृणादिभ्यः से प्रसङ्गः, श्र्यर्थम् भ्वर्थमित्यत्र चेयङुवङौ स्याताम् बहुव्रीहावात्वकपोः प्रसङ्गः । स्यादेतत्—यद्ब्राह्मणार्थं पयस्तस्य ब्राह्मणोऽर्थः प्रयोजक इति शक्यते वक्तुम्, अतो ब्राह्मणोऽर्थोऽस्येति विगृह्य बहुव्रीहिः करिष्यते, तेन चतुर्थ्यन्तेन विग्रहाभावः पूर्वपदप्रकृतिस्वरत्वमभिधेयवल्लिङ्गता च सिद्धयतीति? तन्न; महदर्थमित्यत्रात्वकपोः प्रसङ्गात् । तदर्थस्यार्थादेश उदभावप्रसङ्गः । स्यादेतत्—'चतुर्थी तदर्थ' इत्यनेन समासं विधायार्थं इत्यनेनांशेन तदर्थवाचिन उत्तरपदस्यार्थशब्द आदेशो विधीयते, विभाषाधिकाराच्च यूपार्थं दारु यूपदार्वि-त्युभयं भविष्यति, ततो बलिरक्षितयोरपि विभाषार्थशब्द आदेशो भवति—कुबेरार्थो बलिः कुबेरबलिरित्यादि । किमर्थमिदम्, पूर्वेणैव सिद्धम् ? ज्ञाप-कार्थम्, एतज् ज्ञापयति—प्रकृतिविकाराभावादन्यत्र नित्योऽर्थादेश इति । तेन रन्धनार्था स्थालीत्यादि भवति, न तु रन्धनस्थालीत्यादि । अश्वघासाद-यस्तु पूर्ववत् । अत्र समासे कृते उत्तरपदस्य विधीयमानेनार्थशब्देन विग्रहो न भविष्यति, यस्यावस्थानेऽर्थादेशस्तल्लिङ्गता स्थानिवद्भावेन भविष्यति, अर्थ इति पूर्वप्रदप्रकृतिस्वरस्तु विधेय एवेति,तन्न उदकाय वीवध उदकार्थ इति वीवधशब्द-स्यार्थादेशे कृते स्थानिवद्भावेन मन्थौदनादिसूत्रेणोदभावप्रसङ्गात् । अतश्चतुर्थी-समास एव विधेयः । तथा चार्थेन नित्यसमासः सर्वलिङ्गता च वक्तव्या ? न वक्तव्या, ब्राह्मणायेति चतुर्थ्या तादर्थ्यस्योक्तत्वादर्थशब्देन विग्रहो न भविष्यति । 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति सर्वलिङ्गता च सिद्धा ।

तदेतत्प्रतिपद्यन्तां भाष्ये कृतपरिश्रमाः ।
नान्ये सहस्रमप्यन्धाः सूर्यं पश्यन्ति नाञ्जसा ॥

## पञ्चमी भयेन ॥ ३७ ॥

'सुप्' 'सुपा' इति वर्त्तते, तस्य विशेषणमेतत्पञ्चमी। पञ्चम्यन्तं सुबन्तं भयशब्देन सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति। वृकेभ्यो भयम् वृकभयम्। चौरभयम्। दस्युभयम्।

* भयभीतभीतिभीभिरिति वक्तव्यम् *। वृकेभ्यो भीतः वृकभीतः। वृकभीतिः। वृकभीः। पूर्वस्यैवायं बहुलग्रहणस्य प्रपञ्चः। तथा च—ग्रामनिर्गतः, अधर्मजुगुप्सुरित्येवमादि सिद्धं भवति॥

### पदमञ्जरी

पञ्चमी भयेन॥ भयेनेति स्वरूपग्रहणादव्याप्तिरिति मत्वाऽऽह—*भयभीतभीतिभीभिरिति वक्तव्यमिति*। एवं सूत्रन्यासः कर्तव्य इत्यर्थः। व्याख्यानात्त्वर्थग्रहणे 'वृकेभ्यस्त्रासः' इत्यादावपि प्रसङ्गः इति भावः। स तर्हि तथा न्यासः कर्तव्यः? नेत्याह—*पूर्वस्यैव बहुलग्रहणस्येति*। यथा हि 'पादहारकः' इत्यादौ बहुलग्रहणात्सर्वोपाधिव्यभिचारार्थाद्भवति, एवमत्रापि भविष्यतीत्यर्थः। *अधर्मजुगुप्सुरिति* 'जुगुप्साविराम' इत्यधर्मस्यापादानसंज्ञा॥

### न्यासः

सा च व्यवस्थितविभाषा विज्ञायते। तेनार्थशब्देन नित्यसमासो भविष्यति, सर्वलिङ्गता चेति। 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति परवल्लिङ्गतायां प्राप्तायां सर्वलिङ्गता विधीयते। एषा तु लोकाश्रयत्वाल्लिङ्गस्येति सिद्धा। अथ वा—बहुलग्रहणानुवृत्तेः सर्वमेतत् सिद्धम्। गोहितम्, गोसुखमिति 'चतुर्थी चाशिष्यायुष्य' इत्यादिना चतुर्थी। हितयोगे त्वनाशिष्यपि चतुर्थी भवति। तथा हि वक्ष्यति—हितयोगे चतुर्थी वक्तव्येति॥

पञ्चमी भयेन॥ भयभीतभीतिभीभिरिति वक्तव्यमिति। एवं हि त्रिभिरपि भीतादिभिः समासो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। स्वयमेव व्याख्यातुमाह—पूर्वस्येत्यादि। यथैव हि 'कर्तृकरणे कृता बहुलम्' इति तृतीयान्तस्य समासो विधीयमानो बहुलग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वादन्यविभक्त्यन्तस्यापि समासो भवति—पादहारकः, गलेचोपक इति, तथा वृकभीत इत्यादावपि समासो भविष्यति। तस्मात् पूर्वकस्य बहुलग्रहणस्यैवोदाहरणप्रदर्शनार्थोऽयं योगः प्रपञ्चार्थो वेदितव्यः। तथा चेत्यादि। यस्मात् पूर्वकेणैव बहुलग्रहणेन सिद्धं तस्यैवायम्प्रपञ्चः, तस्मात् तत एव बहुलग्रहणाद् ग्रामनिर्गत इत्याद्यपि सिद्धं भवति। आदिशब्देन वृकभीतादेर्ग्रहणम्॥

अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ॥ ३८ ॥

अपेत, अपोढ, मुक्त, पतित, अपत्रस्त—इत्येतैः सह पञ्चम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति । अपेत—सुखापेतः । अपोढ—कल्पनापोढः । मुक्त—चक्रमुक्तः । पतित—स्वर्गपतितः । अपत्रस्त—तरङ्गापत्रस्तः । 'अल्पशः' इति समासस्याल्पविषयतामाचष्टे । अल्पा पञ्चमी समस्यते, न सर्वा । प्रासादात्पतितः, भोजनादपत्रस्तः—इत्येवमादौ न भवति । 'कर्तृकरणे कृता बहुलम्' इत्यस्यैवायं प्रपञ्चः ॥

स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥ ३९ ॥

स्तोक, अन्तिक, दूर—इत्येवमर्थाः शब्दाः कृच्छ्रशब्दश्च पञ्चम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति । स्तोक—स्तोकान्मुक्तः । अन्तिक—अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रान्मुक्तः । कृच्छ्राल्लब्धः । 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक् ॥

* शतसहस्रौ परेणेति वक्तव्यम् * । शतात्परे परश्शताः । सहस्रात्परे परस्सहस्राः । राजदन्तादित्वात्परनिपातः, निपातनात्सुडागमः ॥

पदमञ्जरी

*अपेतापोढमुक्तपतितापत्रस्तैरल्पशः* ॥ अल्पशब्दाद् 'बह्वल्पार्थात्' इति शस्, 'शसि बह्वल्पार्थस्य' इति पुंवद्भावः । कारकत्वं तु समसनक्रियायां कर्मत्वात् । अत एव पञ्चमी समस्यत इति कर्मणि लकारः । तत्र तु बह्वल्पार्थान्मङ्गले वचनमिति वक्ष्यति । तस्मादत एव निपातनादत्र शसिति युक्तम् । *अल्पा पञ्चमीति* । अल्पाभ्यः प्रकृतिभ्य उत्पन्नेत्यर्थः ।

न्यासः

**अपेतापोढमुक्तपतितापत्रस्तैरल्पशः** ॥ **अल्पश इति** । 'बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्' इति शस् । **अल्पा पञ्चमी समस्यत इति** । अल्पेभ्यः प्रातिपदिकेभ्यः उत्पन्ना या पञ्चमी सा समस्यते, न तु सर्वेभ्यः प्रातिपदिकेभ्य इत्यर्थः ॥

**स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन** ॥ **स्तोकान्मुक्तः । कृच्छ्रान्मुक्त इति** । 'करणे स्तोकाल्पकृच्छ्र' इत्यादिना पञ्चमी । **अन्तिकादागतः, दूरादागत इति** । 'दूरान्तिकार्थेभ्यो द्वितीया च' इत्यनेन ॥

## सप्तमी शौण्डैः ॥ ४० ॥

सप्तम्यन्तं शौण्डादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। अक्षेषु शौण्डः अक्षशौण्डः । अक्षधूर्त्तः । अक्षकितवः ।

[1]शौण्ड । धूर्त्त । कितव । व्याड । प्रवीण । संवीत । अन्तर् । अन्तःशब्दस्त्वत्राधिकरणप्रधान एव पठ्यते । अधिपटु । पण्डित । कुशल । चपल । निपुण । वृत्तौ प्रसक्तिक्रियाया अन्तर्भावादक्षादिषु अधिकरणे सप्तमी[1] ॥

पदमञ्जरी

*सप्तमी शौण्डैः* ।। अत्र साहचर्याद् धूर्त्तादिष्वजहत्स्वार्थ एव शौण्डशब्दः प्रयुज्यते, यथा—छत्रिणो गच्छन्तीति । अत्र च प्रमाणं बहुवचननिर्देशः, अतोऽन्तरेणाप्यादिशब्दं तदर्थो गम्यते इत्याह—*शौण्डादिभिरिति* । गणपाठसामर्थ्यात्तु बहुवचननिर्देशोऽर्थनिर्देशार्थः, बहुवचनान्तस्य वा समासार्थं इति न भवति । ननु चाक्षशौण्ड इत्यादौ क्रियाया अश्रवणादधिकरणत्वं नोपपद्यते, न चान्यत्सप्तम्या निमित्तमस्ति । न चैतदेव ज्ञापकं शक्यमाश्रयितुम्; शौण्डो देवदत्त इत्यादावपि प्रसङ्गाद्, अत आह—*वृत्ताविति* । अन्तःशब्दोऽत्र पठ्यते, तद्योगेऽवयविन आधा-

न्यासः

**सप्तमी शौण्डैः** ॥ शौण्डैरिति बहुवचननिर्देशादाद्यर्थो गम्यत इत्याह—**शौण्डादिभिरिति** । केन पुनर्विहितायां सप्तम्यां तदन्तस्य शौण्डादिभिः समासो विधीयते ? 'सप्तम्यधिकरणे च' इत्यनेनेति चेद्, वार्तमेतत् । तथा ह्यधिकरणं कारकम्, तच्च क्रियापेक्षम् । न चाक्षशौण्ड इत्यादौ वृत्तौ काचन क्रिया श्रूयते । तत् कुतोऽधिकरणस्येह सम्भवः ? न च शक्यते वक्तुम्—अस्मादेव वचनाच्छौण्डादिभिर्योगे सप्तमी भविष्यतीति, देवदत्तः शौण्ड इत्यत्रापि प्रसङ्गः स्यादित्यत आह—**वृत्तावित्यादि** । अस्त्येवात्र प्रसक्तिक्रिया । सा तु समासार्थ एवान्तर्भूतेति गम्यमानत्वाद् वृत्तौ क्रियापदं न प्रयुज्यते । तस्या यत् साधनमधिकरणं तत्र सप्तमीत्यदोषः । अन्तःशब्दस्त्वत्राधिकरणप्रधान एव पठ्यते । तस्य प्रयोगे तत्सामानाधिकरण्यमेव सप्तम्याः कारणम् । वनेऽन्तर्वनान्तर्वसतीति पूर्वपदार्थप्राधान्ये तु 'विभक्त्यर्थे यदव्ययम्' इत्यव्ययीभाव एव भवति—अन्तर्वणमिति । अधिशब्दोऽत्र पठ्यते, तस्याधिकरणप्राधान्ये सत्यव्ययीभावः—अधिस्त्रि । आधेयप्राधान्ये तु तत्पुरुषः—ब्राह्मणेष्वधि ब्राह्मणाधीन इति । ब्राह्मणाधिशब्दः केवलो न प्रयुज्यते । 'अषडक्षाशित' इत्यादिनाऽध्युत्तरपदात् स्वार्थिकस्य नित्यस्य खस्य विधानात् ॥

१-१. अयमंशः क्वचिदनुपलभ्यमानोऽपि न्यासानुरोधेन स्थापितः ।

## सिद्धशुष्कपक्वबन्धैश्च ॥ ४१ ॥

'सप्तमी' इति वर्तते। सिद्ध, शुष्क, पक्व, बन्ध—इत्येतैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। सांकाश्यसिद्धः। काम्पिल्यसिद्धः। शुष्क——आतपशुष्कः। छायाशुष्कः। पक्व——स्थालीपक्वः। कुम्भीपक्वः। बन्ध——चक्रबन्धः। बहुलग्रहणस्यैवायमुदाहरणप्रपञ्चः॥

## ध्वाङ्क्षेण क्षेपे ॥ ४२ ॥

'ध्वाङ्क्षेण' इत्यर्थग्रहणम्। ध्वाङ्क्षवाचिना सह सप्तम्यन्तं सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति, क्षेपे गम्यमाने। तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः। अनवस्थित इत्यर्थः। तीर्थकाकः। तीर्थवायसः।

### पदमञ्जरी

रत्वविवक्षायां सप्तमी, यथा वृक्षे शाखेति, वनेऽन्तर्वनान्तः। अस्य विकल्पितत्वादव्ययीभावोऽपि भवति, अन्तर्वणम्, 'प्रनिरन्तः' इति णत्वम्। अधिशब्दः पठ्यते, तस्याधिकरणप्राधान्येऽव्ययीभावः—अधिस्त्रीति। आधेयप्राधान्ये ह्ययं तत्पुरुषः—ब्राह्मणाधीनमिति। 'अध्युत्तरपदात्खः' इति खः। ब्राह्मणेष्वधीति वाक्यम्॥

*सिद्धशुष्कपक्वबन्धैश्च* ॥ *साङ्काश्यसिद्धः काम्पिल्यसिद्ध इति*। सङ्काशेन निर्वृत्तं वनं साङ्काश्यम्। कम्पिलेन निर्वृत्तं काम्पिल्यम्। चातुरर्थिकः सङ्काशादिभ्यो ण्यः। तत्र तपसा सिद्ध इत्यर्थः॥

ध्वाङ्क्षेण क्षेपे॥ 'स्वं रूपं शब्दस्य' इति वचनात्पर्यायाणां न प्राप्नोतीत्यत आह–*ध्वाङ्क्षेणेत्यर्थग्रहणमिति*। व्याख्यानाच्चैतदवसीयते। *तीर्थे ध्वाङ्क्ष इवेति*। उपमानोपमेयभावे सति क्षेपो गम्यते, नान्यथेतीवशब्दः प्रयुक्तः। यथा तीर्थे ध्वाङ्क्षा न चिरं स्थातारो भवन्ति, एवं कार्येष्वनवस्थितस्तीर्थध्वाङ्क्ष इत्यर्थः, तदाह—*अनवस्थित इत्यर्थ इति*। वृत्तौ त्विवार्थस्यान्तर्भावादिवशब्दस्याप्रयोगः॥

### न्यासः

**सिद्धशुष्कपक्वबन्धैश्च ॥ ध्वाङ्क्षेण क्षेपे ॥** ध्वाङ्क्षेणेत्यर्थग्रहणमिति। अर्थप्रधानत्वान्निर्देशस्य। यत्र हि शब्दप्रधानो निर्देशस्तत्र स्वरूपग्रहणं भवति, अन्यत्र त्वर्थग्रहणमेवेति प्रतिपादितमेतत् प्राक्। अर्थप्रधानत्वन्तु निर्देशस्याविच्छिन्नाचार्यपारम्पर्योपदेशाद् विज्ञायते। बहुलग्रहणानुवृत्तेरर्थस्येदं ग्रहणं वा। अपि च 'क्षेपे' इत्युच्यते, क्षेपश्चार्थकारित एवेत्यर्थग्रहणमेव युक्तम्। अर्थग्रहणे च सति ध्वाङ्क्षपर्यायैरपि समासो भवति, अत आह——ध्वाङ्क्षवाचिनेत्यादि। तीर्थे ध्वाङ्क्ष इवेति।

क्षेप इति किम् ? तीर्थे ध्वाङ्क्षस्तिष्ठति ॥

कृत्यैर्ऋणे ॥ ४३ ॥

'सप्तमी' इति वर्तते। कृत्यप्रत्ययान्तैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति, ऋणे गम्यमाने । यत्प्रत्ययान्तेनैवेष्यते । मासे देयमृणं मासदेयम् । संवत्सरदेयम् । त्र्यहदेयम् ।

ऋणग्रहणं नियोगोपलक्षणार्थम्, तेनेहापि समासो भवति—पूर्वाह्णेगेयं साम । प्रातरध्येयोऽनुवाकः । ऋण इति किम् ? मासे देया भिक्षा ॥

पदमञ्जरी

कृत्यैर्ऋणे ॥ *यत्प्रत्ययान्तेनैवेष्यते इति* । 'अल्पशः' इत्यनुवृत्तेरेतल्लभ्यते । कृत्यैरिति बहुवचनं तु प्रकृतिभेदाभिप्रायम् । *ऋणग्रहणं च नियोगोपलक्षणार्थमिति* । नियोगः = अवश्यम्भावः । ऋणमवश्यदेयमिति नियोगसाहचर्यान्नियोगमात्रमुपलक्षयति । तेन किं सिद्धं भवतीत्याह—*इहापीति* । *पूर्वाह्णेगेयमिति* । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । यथा ऋणमवश्यं देयम्, एवमिदमपि पूर्वाह्णेऽवश्यं गेयमिति नियोगोऽस्ति ॥

न्यासः

उपमानभावे सति ध्वाङ्क्षस्य क्षेपो गम्यते, नान्यथेति दर्शयितुमिवशब्दः प्रयुक्तः । समासे तु समास एवोपमानार्थस्यान्तर्भूतत्वादिवशब्दो गतार्थो न प्रयुज्यते । यथैव हि तीर्थध्वाङ्क्षाश्चिरं स्थातारो न भवन्ति, तद्वदन्योऽपि यः कार्यं प्रत्यनवस्थितः स 'तीर्थध्वाङ्क्षः' इत्युच्यते, यदाह—अनवस्थित इत्यर्थः । कार्यं प्रत्यनवस्थितत्वमेव क्षेपः ।

**कृत्यैर्ऋणे ॥ यत्प्रत्ययान्तेनैव समास इष्यत इति** । कथं पुनर्यत्प्रत्ययेनैव लभ्यते ? अल्पश इत्यनुवृत्तेः । मासदेयमिति । पूर्ववद् यत्, ईत्वञ्च । सप्तमी ह्यत्रौपश्लेषिकेऽधिकरणे वेदितव्या । मासे ह्यतीते योऽन्तरो दिवसः स मासं प्रत्युपश्लिष्टो भवति, 'यस्य च भावेन भावलक्षणम्' इत्यनेन वा । मासातिक्रमणभावेन हि ऋणदानभावो लक्ष्यते । अथ ऋण इत्युच्यते, तत्रेदं न सिध्यति—पूर्वाह्णेगेयं साम, प्रातरध्येयोऽनुवाकः, इत्यत आह—ऋणमित्यादि । ऋणं हि नियोगतो निर्यातयितव्यमिति नियोगसहचरितम् । अतः साहचर्यात् तेन नियोगोऽवश्यम्भाव उपलक्ष्यते । एतच्च 'कृत्यैः' इति बहुवचननिर्देशाल्लिङ्गाद् गम्यते । कथम् ? 'कृत्यैः' इति बहुवचनमत्र विवक्षितम्, तच्च ऋणग्रहणस्य नियोगोपलक्षणार्थत्वे प्रकृतिभेदेन भिद्यमाने कृत्ये सति प्रसज्यते, न त्वन्यथा । यत्प्रत्ययस्यैकत्वात् तेनैव समासस्येष्टत्वात् ॥

## संज्ञायाम् ॥ ४४ ॥

संज्ञायां विषये सप्तम्यन्तं सुपा सह समस्यते, तत्पुरुषश्च समासो भवति । संज्ञा = समुदायोपाधिः । तेन नित्यसमास एवायम्, न हि वाक्येन संज्ञा गम्यते । अरण्येतिलकाः । अरण्येमाषाः । वनेकिंशुकाः । वनेबिल्वकाः । कूपेपिशाचकाः । 'हलदन्तात्सप्तम्याः संज्ञायाम्' इत्यलुक् ॥

## क्तेनाहोरात्रावयवाः ॥ ४५ ॥

अहरवयवाः, रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति । पूर्वाह्णकृतम् । अपराह्णकृतम् । पूर्वरात्रकृतम् । अपररात्रकृतम् ।

अवयवग्रहणं किम् ? एतत्तु ते दिवा वृत्तं रात्रौ वृत्तं च द्रक्ष्यसि[1] । अहनि भुक्तम् । रात्रौ वृत्तम् । बहुलग्रहणाद् रात्रिवृत्तम्, सध्यागर्जितमित्यादयः ॥

## तत्र ॥ ४६ ॥

### पदमञ्जरी

क्तेनाहोरात्रावयवाः ॥ *दिवा वृत्तमिति* । ऐकपद्यमैकस्वर्यं च न भवति । ननु च दिवाशब्दोऽधिकरणशक्तिप्रधानः, तत्राभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति प्रथमैवास्माद्भवति, अतः सप्तम्यभावादेवात्राप्रसङ्गः । नैषोऽस्ति नियमः-अधिकरणशक्तिप्रधान इति; दिवामन्या रात्रिरित्यपि दर्शनात् । कथं 'रात्रिवृत्तमनुयोक्तुमुद्यत' इति ? 'कर्तृकरणे कृता बहुलम्' इति मन्यते । एवं चान्यजन्मकृतमित्याद्यपि भवति ॥

### न्यासः

**संज्ञायाम् ॥ समुदायोपाधिरिति ।** 'संज्ञायाम्' इति नेदं पूर्वपदस्योत्तरपदस्य वा विशेषणम्, किं तर्हि ? समुदायस्य—समुदायेन चेत् संज्ञा गम्यत इति । किमेवं सति सिध्यतीत्यत आह—तेनेत्यादि । अत्रैवोपपत्तिमाह—न हीत्यादि ।

**क्तेनाहोरात्रावयवाः ॥** एतत् तु ते दिवावृत्तं रात्रौ वृत्तञ्च द्रक्ष्यसीत्यादि । नात्राहरवयवाः रात्र्यवयवाश्च सन्ति, किं तर्हि ? कृत्स्नमेवाहः, कृत्स्ना च रात्रिरिति, तेनेह समासो न भवति ॥

---

१. 'उलूखलैराभरणैः पिशाची यदभाषत' इत्यस्य पद्यस्य पूर्वार्धमपि क्वचित् लभ्यते ।

'तत्र' इत्येतत् सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। तत्रभुक्तम्। तत्रकृतम्। तत्रपीतम्। ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति ॥

क्षेपे ॥ ४७ ॥

क्षेपः = निन्दा। क्षेपे गम्यमाने सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। अवतप्तेनकुलस्थितं तवैतत्। चापलमेतत्, अनवस्थितत्वं तवैतदित्यर्थः। उदकेविशीर्णम्। प्रवाहेमूत्रितम्। भस्मनिहुतम्। निष्फलं यत्क्रियते तदेवमुच्यते। 'तत्पुरुषे कृति बहुलम्' इत्यलुक् ॥

पदमञ्जरी

तत्र ॥ *तत्रेत्येतत्सप्तम्यन्तमिति*। तत्रभवानित्यादौ विभक्त्यन्तरेऽपि दर्शनादधिकरणप्रतिपादने तत्रशब्दादपि सप्तम्येवापेक्ष्येति मन्यते ॥

क्षेपे ॥ *अवतप्तेनकुलस्थितं तवैतदिति* चिरन्तनप्रयोगः, तस्यार्थमाह—*चापलमेतत्तवेत्यर्थ इति*। यथा अवतप्ते प्रदेशे नकुला न चिरं स्थातारो भवन्ति, एवं कार्याण्यारभ्य यश्चापलेन न चिरं तिष्ठति स एवमुच्यत इत्यर्थः। 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति नकुलस्थितशब्देन समासः, पूर्ववदलुक् ॥

न्यासः

तत्र ॥ तत्रेत्येतत् सप्तम्यन्तमिति। सप्तमीसाधर्म्यात्। त्रल्प्रत्यय एवात्र सप्तमीशब्देनोक्तः। भवति हि ताद्धर्म्यात् ताच्छब्द्यम्, यथा—गौर्वाहीक इति। सप्तमीसाधर्म्यं पुनस्त्रलोऽधिकरणार्थत्वात्। यथैव ह्यधिकरणप्रत्यायनाय सप्तमी प्रयुज्यते, तथा त्रलपि। अथ मुख्यैव सप्तमीविभक्तिः कस्मान्न विज्ञायते? तस्यास्तत्र शब्देऽसम्भवात्। असम्भवस्तु त्रलैव तदर्थस्य द्योतितत्वात्। अन्यस्त्वाह—यदा विभक्त्यादेशस्त्रलादयस्तदा स्थानिवद्भावेनैवैतत् सप्तम्यन्तं भवति। आदेशपक्षस्तु तत्र वृत्तिकृता नाश्रित इत्यसम्यगेतत्। अन्तशब्दश्चात्रावयववचनः। सप्तमीत्रल्प्रत्ययोऽन्तोऽवयवो यस्य तत् तथोक्तम् ॥

क्षेपे ॥ अवतप्तेनकुलस्थितमिति। 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक्। कः पुनरत्र क्षेपः? कार्येष्वनवस्थितता। यदाह—एतच्चापलमित्यादि। यथा अवतप्ते देशे नकुला न चिरं स्थातारो भवन्ति, तद्वदन्योऽपि योऽर्थानारभ्य न चिरं तेष्ववतिष्ठते तं प्रतीदमुच्यते—अवतप्तेनकुलस्थितमिति। उदके विशीर्णमित्यादावप्यारम्भस्य निष्फलता क्षेपः। अत एवाह—निष्फलं यत् क्रियते तदेवमुच्यत इति। प्रवाहेमूत्रितमिति। 'मूत्र प्रस्रवणे' चुरादिः ॥

## पात्रेसमितादयश्च ॥ ४८ ॥

समुदाया एव निपात्यन्ते । पात्रेसमितादयः शब्दास्तत्पुरुषसंज्ञा भवन्ति, क्षेपे गम्यमाने । ये चात्र क्तान्तेन सह समासास्तेषां पूर्वेणैव सिद्धे पुनः पाठो युक्तारोह्यादिपरिग्रहार्थः—पूर्वपदाद्युदात्तत्वं यथा स्यादिति । युक्तारोह्यादिषु हि पात्रेसमितादयश्चेति पठ्यन्ते । पात्रेसमिताः । पात्रेबहुलाः । अवधारणेन क्षेपो गम्यते—पात्र एव समिता न पुनः क्वचित्कार्यं इति । उदुम्बरमशकादिषु उपमया क्षेपः । मातरिपुरुष इति प्रतिषिद्धसेवनेन । पिण्डीशूरादिषु निरीहतया । [1]अव्यक्तत्वाच्चाकृतिगणोऽयम् । पात्रेसमिताः । पात्रेबहुलाः । उदुम्बरमशकाः । उदर-

### पदमञ्जरी

*पात्रेसमितादयश्च* ॥ *युक्तारोह्यादिपरिग्रहार्थमिति* । युक्तारोह्यादयश्चेत्यत्रैषामपि परिग्रहो यथा स्यादित्यर्थः । *पात्र एव समिता इति* । भोजनसमय एव सङ्गता इत्यर्थः । *पात्रेबहुला इति* । भोजनसमय एव सङ्घीभवन्ति, नान्यकार्यं इत्यर्थः । *उदुम्बरमशकादिष्विति* । यस्तत्रैव तृप्तो नास्मात्परमस्तीति मन्यते, सोऽयमदृष्टविस्तारः पुरुष उदुम्बरमशकादिरुच्यत इत्यर्थः । *प्रतिषिद्धसेवनेनेति* । शत्रुषु भार्यायां वा पुरुषायितव्यम्, मातरि पुरुषायितं प्रतिषिद्धम् । *निरीहतयेति* । पिण्डी = ओदनपिण्डः, तत्रैव शूरो नान्यत्रेति निरीहता । *परमपात्रेसमिता इति* । एवंरूपं वृत्त्यन्तरं न भवति, परमाः पात्रेसमिता इति वाक्यमेव भवतीत्यर्थः ॥

### न्यासः

पात्रेसमितादयश्च ॥ **युक्तारोह्यादिपरिग्रहार्थं इति** । युक्तारोह्यादिषु युक्तारोह्यादिभिर्वा परिग्रहोऽर्थः प्रयोजनं यस्य पाठस्य स तथोक्तः । किमर्थं पुनर्युक्तारोह्यादिषु परिग्रहस्तेषामिष्यत इत्याह—**पूर्वपदाद्युदात्तत्वं यथा स्यादिति** । युक्तारोह्यादीनां हि 'युक्तारोह्यादयश्च' इत्यनेन पूर्वपदाद्युदात्तत्वं विधीयते । तत्र यदि ये क्तान्तास्ते न पठ्येरन्, तदा तेषामाद्युदात्तत्वं न स्यात् । कथं पुनः पात्रेसमितादयो युक्तारोह्यादिग्रहणेन गृह्यन्ते; यतस्तेषां विधीयमानमाद्युदात्तत्वं पात्रेसमितादीनामपि भवतीत्याह—**युक्तारोह्यादिषु हीत्यादि** । **उदुम्बरमशकादिषूपमया क्षेप इति** । यस्तत्रैवावरुद्धो न क्वचिद् गच्छति तमेव विशिष्टं मन्यते—नास्मात् परमस्तीति, सोऽदृष्टविस्तार उच्यत उदुम्बरमशक इति । एवमन्यत्राप्युपमानात् क्षेपः । **प्रतिषिद्धसेवनेनेति** । यः कश्चित् प्रतिषिद्धमाचरति स मातरिपुरुष इत्युच्यते । **निरीहतयेति** । यो न किञ्चित् कर्तुं समर्थः स पिण्डीशूर

१. 'अवृत्करणात्०' इति पाठान्तरम् ।

क्रिमिः । कूपकच्छपः । कूपचूर्णकः । अवटकच्छपः । कूपमण्डूकः । कुम्भमण्डूकः । उदपानमण्डूकः । नगरकाकः । नगरवायसः । मातरिपुरुषः । पिण्डीशूरः । गेहेशूरः । गेहेनर्दी । गेहेक्ष्वेडी । गेहेविजिती । गेहेव्याडः । गेहेदृप्तः । गेहेधृष्टः । गर्भेतृप्तः । आखनिकबकः । गोष्ठेशूरः । गोष्ठेविजिती । गोष्ठेक्ष्वेडी । गेहेमेही । गोष्ठेपटुः । गोष्ठेपण्डितः । गोष्ठेप्रगल्भः । कर्णेटिट्टिभः । कर्णेचुरचुरा । चकारोऽवधारणार्थः, तेन समासान्तरं न भवति—परमपात्रेसमिता इति ।

**पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥ ४९ ॥**

'सुप्' 'सुपा' इति वर्त्तते, तस्य विशेषणमेतत् । पूर्वकाल, एक, सर्व, जरत्, पुराण, नव, केवल–इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति । भिन्नप्रवृत्तिनिमित्तस्य शब्दस्यैकस्मिन्नर्थे वृत्तिः = सामानाधिकरण्यम् । 'पूर्वकाल' इत्यर्थनिर्देशः, परिशिष्टानां स्वरूपग्रहणम् । पूर्वकालोऽपरकालेन

पदमञ्जरी

*पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन* ॥ *भिन्नप्रवृत्तिनिमित्तस्येत्यादि* । भिन्नग्रहणं पर्यायनिवृत्त्यर्थम् । एकग्रहणं गौरश्व इत्यादिनिवृत्त्यर्थम् । क्वचिद् *भिन्ननिमित्तप्रयुक्तस्येति* पाठः, भिन्नेन निमित्तेन प्रवृत्तिनिमित्तेन प्रवर्त्तितस्येत्यर्थः । 'विशेषणं विशेष्येण' इति सिद्धे पूर्वकालादीनां पूर्वनिपातार्थं वचनम्, एकशब्दस्य तु 'दिक्संख्ये संज्ञायाम्' इति नियमात्प्राप्त्यर्थमेव । *पूर्वकाल इत्यर्थग्रहणमिति* । पूर्वः कालोऽस्य पूर्वकालः, पूर्वमनुष्ठित इत्यर्थः । स च चरमानुष्ठित-

न्यासः

इत्येवमादिभिः पदैरभिधीयते । चकारोऽवधारणार्थ इति । पात्रेसमितादय एव यथा स्युः, यदन्यत् समासान्तरं तेषां प्राप्नोति तन्मा भूदिति । तेन परमपात्रेसमिता इति 'सन्महत्' इत्यादिना समासान्तरं न भवति ॥

**पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥ भिन्नप्रवृत्तिनिमित्तप्रयुक्तस्येत्यादि ।** भिन्नप्रवृत्तिनिमित्तग्रहणं पर्यायनिवृत्त्यर्थम् । एकग्रहणं गौरश्व इत्यादिनिवृत्त्यर्थम् । **पूर्वकाल इत्यर्थनिर्देश इति ।** अर्थप्रधानत्वान्निर्देशस्य । तेन स्वरूपग्रहणं न भवतीति भावः । **परिशिष्टानां स्वरूपग्रहणमिति ।** शब्दप्रधानत्वान्निर्देशस्य । **पूर्वकालोऽपरकालेनेति ।** कुतः पुनरनुक्तोऽप्येषोऽर्थविशेषो लभ्यते; सम्बन्धिशब्दत्वात्

समस्यते । स्नातानुलिप्तः । कृष्टसमीकृतम् । दग्धप्ररूढम् । एकशाटी । एकभिक्षा । सर्वदेवाः । सर्वमनुष्याः । जरद्धस्ती । जरद्गृष्टिः । जरद्वृत्तिः । पुराणान्नम् । पुराणावसथम् । नवान्नम् । नवावसथम् । केवलान्नम् ।

समानाधिकरणेनेति किम् ? एकस्याः शाटी ।

## दिक्संख्ये संज्ञायाम् ॥ ५० ॥

'समानाधिकरणेन' इत्यापादसमाप्तेरनुवर्त्तते । दिग्वाचिनः शब्दाः संख्या च समानाधिकरणेन सुबन्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति, संज्ञायां विषये । पूर्वेषुकामशमी । अपरेषुकामशमी । संख्या—पञ्चाम्राः । सप्तर्षयः ।

संज्ञायामिति किम् ? उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ॥

### पदमञ्जरी

मपेक्ष्य भवतीत्यर्थात्तेनैव समासो विज्ञायत इत्याह—*परकालेनेति* । *स्नातानुलिप्त इति* । पूर्वं स्नातः पश्चादनुलिप्त इत्यर्थः । अत्र क्रियाशब्दत्वात्पाचकपाठकादिवत्पूर्वनिपातः पर्यायात्स्यात् । *एकशाटीति* । शाटशब्दाज्जातिलक्षणो ङीष्, 'एकतद्धिते च' इति ह्रस्वः । *सर्वमनुष्य इति* । अत्र विशेषणमित्यपि समासे न दोषः, तस्मात्क्रियावाचिनां गुणवाचिनां वा समासो दर्शनीयः । एवं जरदादिष्वपि । *एकस्याः शाटीति* । अत्र भवितव्यमेव षष्ठीसमासेन, तस्मादेकस्याः शौक्ल्यमिति प्रत्युदाहर्त्तव्यम् । अत्र हि गुणेन नेति प्रतिषेधः ॥

*दिक्संख्ये संज्ञायाम्* ॥ 'विशेषणं विशेष्येण' इति सिद्धे नियमार्थमेतत्—संज्ञायामेव, नान्यत्रेति । पूर्वसूत्रमित्यादौ त्वदिग्वाचित्वात् समासः ॥

### न्यासः

पूर्वकालस्य ? न ह्यनपेक्ष्यापरकालं पूर्वकालः सम्भवति, अतः पूर्वकालपरिग्रहे कृते सत्यपरकालस्यापि परिग्रहः कृत एव । स्नातानुलिप्त इति । पूर्वं स्नातः पश्चादनुलिप्त इत्यत्र स्नातशब्दः स्नानेन निमित्तेन प्रयुक्तः, अनुलिप्तशब्दोऽनुलेपनेन; तयोश्चैकत्रार्थे वृत्तिरित्यस्ति सामानाधिकरण्यम् । एकशाटीति । एका चासौ शाटी चेति 'पुंवत्कर्मधारय' इत्यादिना पुंवद्भावः ॥

**दिक्संख्ये संज्ञायाम्** ॥ पूर्वेषुकामशमीत्यादिर्ग्रामाणां संज्ञा । पूर्वा चासाविषुकामशमी चेति पूर्वेषुकामशमी । मन्दधियां पूर्वोत्तरपदविभागमात्रप्रदर्शनार्थं वाक्यं कृतम् । न ह्यत्र वाक्येन भवितव्यम्; न हि वाक्येन संज्ञा गम्यते ॥

## तद्धितार्थोत्तरपदसमाहारे च ॥ ५१ ॥

'दिक्संख्ये' इत्यनुवर्त्तते। तद्धितार्थे विषये उत्तरपदे च परतः समाहारे चाभिधेये दिक्संख्ये समानाधिकरणेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति।

तद्धितार्थे तावत्—पूर्वस्यां शालायां भवः। 'दिक्पूर्वपदादसंज्ञायां ञः', पौर्वशालः, आपरशालः। उत्तरपदे—पूर्वशालाप्रियः, अपरशालाप्रियः।

### पदमञ्जरी

*तद्धितार्थोत्तरपदसमाहारे च* ॥ 'विशेषणं विशेष्येण' इति सिद्धस्य पूर्वेणानियमादप्राप्तविधिरयम्। अगृह्यमाणविषयत्वाद्वायमपि नियमः शक्यते वक्तुम्—अयं नियमः पूर्वो विधिरिति। एकापि सप्तमी विषयभेदाद्भिद्यत इत्याह—*तद्धितार्थे विषयभूत इत्यादिना*। तद्धितार्थेऽभिधेय इत्येवं तु विज्ञायमाने पाञ्चनापितिरित्यादौ तद्धितो दुर्लभः स्यात्; तदर्थस्य समासेनैवोक्तत्वादिति भावः। अस्मिन् पक्षेऽर्थग्रहणं चिन्त्यप्रयोजनम्। तद्धिते विषय इत्येवास्तु, तद्धिते परत इति तु विज्ञायमाने इतरेतराश्रयं प्राप्नोति—समासात्तद्धितो विधेयः, तद्धिते च समास इति। किञ्च—'तद्धितार्थेऽभिधेये' इत्यस्मिन् पक्षे न दोषः, 'द्विगोर्लुगनपत्ये' इति लुग्वचनं ज्ञापकमुत्पद्यते—द्विगोस्तद्धित इति सर्वतद्धितसाधारणो द्विगुः, तत्रावश्यं विशेषाभिधानाय तद्धित उत्पद्यत इत्यपि शक्यं विज्ञातुम्। अथेवं कस्मान्न विज्ञायते—तद्धितार्थे द्विगुर्भवति, तद्धितो यथा स्यादिति द्विगुर्भवतीति, यथा—दारार्थं घटामहे, दारा यथा स्युरिति घटामह इति? नैवं शक्यं विज्ञातुम्; एवं हि विज्ञायमाने तद्धितोत्पत्तये विधीयमाना समाससंज्ञा विषयान्तरे न स्यात्। एवं तस्यैव समासस्य विधीयमाना द्विगुसंज्ञापि, ततश्च पञ्चारत्निरित्यत्र इगन्ते द्विगाविति स्वरो न स्यात्, तस्य तु समाहारद्विगुरवकाशः, यथा—स्वरे विधीयमानः पराङ्गवद्भावः षत्वणत्वयोर्न भवति, तथात्रापि। *पौर्वशाल इति*। पूर्वस्यां शालायां भव इति तद्धितार्थे विवक्षिते समासः, ततस्तद्धितः।

### न्यासः

तद्धितार्थोत्तरपदसमाहारे च ॥ एकस्या अपि सप्तम्या विषयभेदेन भेदं दर्शयितुमाह—तद्धितार्थे विषय इत्यादि। यदि तद्धितार्थेऽभिधेय इत्येवं विज्ञायेत, तदा पाञ्चनापितिरित्यादौ तद्धितो दुर्लभः स्यात्। तदर्थस्य समासेनैवोक्तत्वादित्येतन् मनसि कृत्वा तद्धितार्थापेक्षया विषयसप्तमीयमिति दर्शयितुं 'तद्धितार्थे विषये' इत्युक्तम्। तद्धिताः—अणादयः, तेषामर्थोऽपत्यादिः, तस्मिन् विषये। अनन्यत्रभावो विषयशब्दस्यार्थः, यथा—मत्स्यानां जलं विषयः इति। पौर्वशाल इति। पूर्वस्यां शालायां भव इति

समाहारे दिक्शब्दो न संभवति। संख्या, तद्धितार्थे-पाञ्चनापितिः। पञ्चकपालः। उत्तरपदे-पञ्चगवधनः, दशगवधनः।

### पदमञ्जरी

*पूर्वशालाप्रिय इति*। पूर्वा शाला प्रियास्येति त्रिपदे बहुव्रीहौ प्रियशब्दे उत्तरपदे परतः पूर्वयोस्तत्पुरुषे सति समासान्तोदात्तत्वं शालाशब्दस्य भवति, असति त्ववान्तरतत्पुरुषे पूर्वपदप्रकृतिस्वरेण पूर्वशब्दस्याद्युदात्तत्वमवतिष्ठेत।

*समाहारे दिक्शब्दो न सम्भवतीति*। स हि समूहरूपत्वाद्भेदनिबन्धनः, संख्यैव च भेदमाचष्टे, दिक्शब्दस्तु प्रत्यर्थं नियतः। विभक्तिरपि समासे निवर्त्तते। ननु यथा 'काकसमूहः' इत्यत्र विभक्त्यभावेऽपि भेदावगतिस्तथात्रापि भविष्यति, तस्मात्प्रयोगाभावादित्येवात्र हेतुर्वक्तव्यः।

*पाञ्चनापितिरिति*। पञ्चानां नापितानामपत्यमिति समासे, अत इञ्। *पञ्चकपाल इति*। पञ्चसु कपालेषु संस्कृत इति समासे 'संस्कृतं भक्षाः' इत्यणः 'द्विगोर्लुगनपत्ये' इति लुक्। *पञ्चगवधन इति*। पञ्च गावो धनमस्येति त्रिपदे बहुव्रीहौ कृते धनशब्द उत्तरपदे परतः पूर्वयोस्तत्पुरुषे 'गोरतद्धितलुकि' इति टच्। अयमुत्तरपदे तत्पुरुषो महाविभाषाधिकाराद्विकल्पेन प्राप्नोति, नित्यो वक्तव्यः; अन्यथा पञ्चगोधन इत्यपि स्यात्। उक्तं च 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्' इति, वाक्च दृषच्च प्रिये अस्य वाग्दृषदप्रिय इति त्रिपदबहुव्रीहौ पूर्वयोर्द्वन्द्वः, स च नित्य इष्यते-नित्यं समासान्तो यथा स्यादिति।

### न्यासः

तद्धितार्थे विषयभूते प्राक् समासः। ततः सुब्लुक्। ततस्तद्धितः। पूर्वशालाप्रिय इति पूर्वा शाला प्रियाऽस्येति पूर्वं पदानां त्रयाणां बहुव्रीहिः। पश्चात् प्रियशब्दे उत्तरपदे परतः पूर्वयोः पदयोस्तत्पुरुषः। तस्मिन् सति समासान्तोदात्तत्वं भवति शालेत्यत्र। समाहारे दिङ् न सम्भवतीति। समाहारो हि समूहः। स च भिन्नार्थानामेवैककालानां भवति। बुद्ध्या युगपदर्थानां परिग्रहादेककालत्वम्, न त्वभिन्नवस्तुनः। संख्यैव च भेदमाचष्टे; तस्या भिन्नार्थाभिधायित्वात्, न तु दिक्शब्दः; तस्य प्रतिनियतविषयत्वात्। तस्मात् समाहारे दिक्शब्दो न सम्भवतीति स न तत्र समस्यते। पाञ्चनापितिरिति। पञ्चानां नापितानामपत्यमिति तद्धितार्थे विषयभूते प्राक् समासः। पश्चाद् 'अत इञ्'। पञ्चकपाल इति। पञ्चसु कपालेषु संस्कृत इति तद्धितार्थे विषयभूते पूर्वं समासः, पश्चादण्। तस्य 'द्विगोर्लुगनपत्ये' इति लुक्। पञ्चगवधनमिति। पञ्च गावो धनमस्येति प्राक् त्रयाणां पदानां बहुव्रीहिः। उत्तरकालं धनशब्द उत्तरपदे परतः पूर्वयोः पदयोस्तत्पुरुषः। तस्मिन् सति 'गोरतद्धितलुकि' इति टच् समासान्तः। तत्र हि 'तत्पुरुष-

समाहारे—पञ्चपूली, दशपूली। पञ्चकुमारि, दशकुमारि। 'स नपुंसकम्' इति नपुंसकत्वम्, 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम् ॥

पदमञ्जरी

*पञ्चपूलीति*। पञ्चानां पूलानां समाहार इति विग्रहः, न तु पञ्चपूलाः समाहृता इति। भावसाधनो हि समाहारशब्दः—समाहरणं समाहारः = विप्रकीर्णानामेकत्र राशीकरणम्। पञ्चग्रामः, षण्णगरी, त्रिपुरीत्यत्रैकस्मिन् क्षणे क्रियायां समन्वयाद्भिन्नदेशानामपि बुद्धया राशीकरणं भवति। अथ कर्मसाधने को दोषः? इह पञ्चकुमारीति, कुमार्यर्थप्राधान्यात्समासशास्त्रे चाप्रथमानिर्दिष्टत्वादेकविभक्तित्वाभावाच्चोपसर्जनत्वाभावाद् 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वो न स्यात्, काममत्र नपुंसकह्रस्वत्वं सिद्धम्। इह पञ्च खट्वाः समाहृताः पञ्चखट्वीति वा टाबन्त इति स्त्रीलिङ्गपक्षे ह्रस्वाभावाद् 'द्विगोः' इति ङीब् न स्यात्। भावसाधने तु समासार्थे समाहारे नानाविभक्तिभिर्युज्यमानेऽपि कुमारीशब्दस्य नित्यं षष्ठ्यैव योग इत्येकविभक्तिकत्वात्सिद्धमुपसर्जनत्वम्। तस्माद्भावसाधनः।

द्विगुरेकवचनमित्येतत्तु 'स नपुंसकम्' इति वक्ष्यामीत्यारभ्यते, कथं पञ्चपूलीमानयेत्युक्ते पूलानामानयनम्, नान्तरेण द्रव्यानयनं भावानयनं सम्भवति, यथा नान्तरेण पात्रानयनमग्नेरानयनं सम्भवति? एवमपि समाहारग्रहणमनर्थकम्, भावसाधनो हि समाहारशब्दः समूहपर्यायः, समूहश्च तद्धितार्थस्तत्र 'तद्धितार्थ' इत्येव सिद्धम्। यद्येवम्, तद्धितोत्पत्तिः प्राप्नोति? उत्पद्यतां तद्धितः, 'द्विगोः' इति लुग्भविष्यति। लुक्कृतानि प्राप्नुवन्ति, पञ्चपूली—'अपरिमाणबिस्ताचित' इति ङीप्प्रतिषेधः प्राप्नोति, 'पञ्चगवम्, 'गोरतद्धितलुकि' इति टच् न प्राप्नोति? नैष दोषः; अपरिमाणेत्यत्र न तद्धितलुकीत्यपास्य 'समाहार' इति वक्तव्यम्,

न्यासः

स्याङ्गुलेः' इत्यतस्तत्पुरुषग्रहणमनुवर्त्तते। पञ्चपूलीति। पञ्चानां पूलानां समाहार इति विग्रहः। 'द्विगुरेकवचनम्' इत्येकवद्भावः। 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति स्त्रीलिङ्गता, 'द्विगोः' इति ङीप्। ननु समाहारः = समूहः, समूहश्च तद्धितार्थे भवतीत्यपार्थकं समाहारग्रहणम्; तद्धितार्थ इत्येव सिद्धत्वात्? नैतदस्ति; पञ्चकुमारीत्यत्र हि समूहप्रत्ययस्य 'द्विगोर्लुगनपत्ये' इति लुकि कृते 'लुक् तद्धितलुकि' इति स्त्रीप्रत्ययस्यापि लुक् स्यात्। समाहारे तु पृथग् गृहीते तद्धितानुत्पत्तिरेवात्र विषये समाख्यायते। ततो न भवत्येष दोषः। पञ्चानां कुमारीणां समाहारः पञ्चकुमारी। 'एकविभक्ति चापूर्वनिपाते' इत्युपसर्जनसंज्ञायाम् 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम्। कथं पुनरत्रैकविभक्तित्वम्? षष्ठ्यैवैकया योगात्। तथा हि समाहारः

## संख्यापूर्वो द्विगुः ॥ ५२ ॥

'तद्धितार्थोत्तरपदसमाहारे च' इत्यत्र यः संख्यापूर्वः समासः स द्विगुसंज्ञो भवति ।

तद्धितार्थे तावत्—पञ्चसु कपालेषु संस्कृतः पञ्चकपालः, दशकपालः । 'संस्कृतं भक्षाः' इतीहाण्, तस्य 'द्विगोर्लुगनपत्ये' इति लुक् ।

उत्तरपदे—पञ्चनावप्रियः । 'नावो द्विगोः' इति समासान्तो भवति ।

समाहारे—पञ्चपूली । 'द्विगोः' इति ङीब् भवति ।

द्विगुप्रदेशाः—'द्विगोः' इत्येवमादयः ॥

### पदमञ्जरी

तन्नियमार्थम्—अविशेषेण द्विगोर्ङीब्भवति, अपरिमाणान्ताद्बिस्ताचितकम्बल्यान्ताच्च समाहार एवेति, पञ्चानामश्वानां समाहारः पञ्चाश्वी । क्व मा भूत् ? पञ्चभिरश्वैः क्रीता पञ्चाश्वा । 'गोरतद्धितलुकि' इत्यत्राप्यतद्धितलुकीत्यपास्य 'द्विगोः समाहार' इति वक्तव्यम्, तन्नियमार्थम्—गोशब्दान्तस्य तत्पुरुषस्याविशेषेण टज् भवति, द्विगोस्तु समाहार एवेति, पञ्चानां गवां समाहारः पञ्चगवम् । क्व मा भूत् ? पञ्चभिर्गोभिः क्रीतः पञ्चगुः पटः । एवमपि पञ्चकुमारीत्यत्र 'लुक् तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुक् प्राप्नोति । तस्मात्तद्धितनिवृत्त्यर्थम् । समाहारग्रहणात्तु समासस्यैव समाहारो वाच्यः, न तद्धितस्येति व्याख्यानात्तद्धितो नोत्पद्यत इति सिद्धमिष्टम् । इह पञ्च गावोऽस्य सन्ति पञ्चगुः पुरुष इति मत्वर्थस्य तद्धितार्थत्वादयं समासः प्राप्नोति, न बहुव्रीहिः; अशेषत्वात् । तस्य तु चित्रग्वादिरवकाशः, यत्र दिक्संख्ये न स्तः । सति चास्मिन्समासे मतुपः श्रवणं स्यात् । अप्राग्दीव्यतीयत्वाद् द्विगोर्लुगपि नास्ति । तस्मान्मत्वर्थे प्रतिषेधो वक्तव्यः ॥

*संख्यापूर्वो द्विगुः* ॥ क्वचिदनन्तरोऽपेक्ष्यते, यत्रैतदुच्यते—'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति; क्वचित्समुदायः, यथा—'न षट्स्वस्रादिभ्यः' इत्यत्र वक्ष्यते—तस्मान्नोभावविति तदिह समुदायोऽपेक्ष्यते ? अनन्तरो वा ? इति संशयेऽनन्तर इत्याह—*तद्धितार्थ* इत्यादि । अयं भावः—समुदाया-

### न्यासः

समूहः, तेन च तत्सम्बन्धे षष्ठ्यैव भवितव्यम् । अतः समाहारः कुमारीणाम्, समाहारं कुमारीणां पश्य, समाहारेण कुमारीणामित्येवमादिभिरनेकाभिर्विभक्तिभिर्युज्यमानेऽपि समाहारशब्दे कुमारीशब्दः षष्ठ्यैवैकया युज्यत इत्येकविभक्तिकत्वम् ॥

**संख्यापूर्वो द्विगुः** ॥ समासान्तो भवतीति । टच् । 'राजाहःसखिभ्यष्टच्' इत्यनुवृत्तेः ॥

## कुत्सितानि कुत्सनैः ॥ ५३ ॥

कुत्सितवाचीनि सुबन्तानि कुत्सनवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। शब्दप्रवृत्तिनिमित्तकुत्सायामयं समास इष्यते[1]। 'विशेषणं विशेष्येण' इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थं आरम्भः। वैयाकरणखसूचिः। निष्प्रतिभ इत्यर्थः।

**पदमञ्जरी**

पेक्षायां संख्यापूर्वपदसमानाधिकरणसमासमात्रपरिग्रहे द्विमुनि व्याकरणस्येत्यव्ययीभावस्यापि स्यादितीगन्ते द्विगाविति स्वरप्रसङ्गः। समानाधिकरणतत्पुरुषापेक्षायामपि एकशाटीत्यत्रापि स्यात्। संख्याशब्दोपादानविहिततत्पुरुषपरिग्रहेऽपि 'दिक्संख्ये संज्ञायाम्' इत्यस्यापि ग्रहणात्सप्तर्षय इत्यत्र द्विगुस्वरप्रसङ्गः। योगविभागश्चानर्थकः, 'दिक्संख्ये संज्ञायां तद्धितार्थोत्तरपदसमाहारे' इत्येकयोगः कर्त्तव्यः स्यादिति। कथमेकापूपीति? अत्र ह्येकश्चासावपूपश्चेति पूर्वकालेति समासे कृते द्विगुत्वे सति 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति 'द्विगोः' इतीकारः सिद्ध्यति, नान्यथा। न चैकशाटीतिवज्जातिङीषन्तेन समासः शक्यते कर्तुम्, केवलस्यापूपशब्दस्य पुंल्लिङ्गत्वात्? उच्यते–अत्रानन्तरसूत्रेण समाहार एव समासः। नन्वनेकविषयः समाहारो नैकस्य सम्भवति, कथम्? इहैकमप्यपूपं कश्चित्कृपणो दददनेकं मन्यते, तथा दानश्रद्धातिशयादपूपमहत्त्वाद्वाऽनेकस्मिन्न्यः संगमस्तमेकस्मिन्नपि करोति। अनेन प्रतिग्रहीता कृपणो व्याख्यातः, तत्रारोपितबहुत्वाश्रयः समाहार इति सिद्धम्॥

*कुत्सितानि कुत्सनैः*॥ *कुत्सितानीति*। 'कुत्स अवक्षेपणे' मत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्त्तमाने क्तः। बहुवचननिर्देशादुभयत्रार्थग्रहणं न स्वरूपग्रहणमित्याह—*कुत्सितवाचीनीति*। *वैयाकरणखसूचिरिति*। सूचयतेः 'इच्च' इती-

**न्यासः**

कुत्सितानि कुत्सनैः॥ कुत्सितशब्दोऽयमिह रूढिमाचष्टे। तथा च निष्ठा भूतकालं नोपादत्ते। कुत्सनशब्देन च कुत्साहेतुर्धर्मो गृह्यते—कुत्स्यते गर्ह्यतेऽनेनेति कृत्वा। बहुवचननिर्देशस्तु स्वरूपविधेर्निरासार्थः। तेन कुत्सितवाचिनां कुत्सनवचनैः सह समासो विज्ञायते, न तु कुत्सितशब्दस्य कुत्सनशब्देन। अत आह—कुत्सितवाचीनीत्यादि। शब्दप्रवृत्तिनिमित्तकुत्सायामयं समासो वेदितव्यः। कुतः पुनरेतल्लभ्यते? प्रत्यासत्तेः। शब्दस्य हि प्रवृत्तिनिमित्तं प्रत्यासन्नम्, अतस्तत् कुत्सायामेव समासेन भवितुं युक्तम्। वैयाकरणखसूचिरिति। वैयाकरणश्चासौ खसूचिश्चेति विग्रहः। यः पृष्टः सन् व्याकरणे खमाकाशं सूचयतीति निरीक्षते निष्प्रतिभो भवति स

१. इदं वाक्यं प्रक्षिप्तं प्रतिभाति।

याज्ञिककितवः । अयाज्ययाजनतृष्णापर उच्यते । मीमांसकदुर्दुरूढः । नास्तिकः ।

कुत्सितानीति किम् ? वैयाकरणश्चौरः । न ह्यत्र वैयाकरणत्वं कुत्स्यते । कुत्सनैरिति किम् ? कुत्सितो ब्राह्मणः ॥

पदमञ्जरी

कारः । यः पृष्टः सन् प्रश्नं विस्मारयितुं खं सूचयति=खं निरीक्षते—अहो निर्मलं गगनमिति, स एवमुच्यते । अत्र व्याकरणस्य वेदाङ्गस्याध्ययनं प्रशस्तमपि प्रतिभानाभावेन निष्फलत्वात्कुत्स्यते । *याज्ञिककितव इति* । किं तवास्तीति धनमात्रप्रश्नेन जात्यादिनिरपेक्षो द्यूते प्रवर्त्तमानः कितवः । इह तु कितव इव कितवः, यो याज्ञिको याज्यस्य धनसत्तामेवापेक्षते न यागार्हताम्, स याज्ञिककितव इत्युच्यते, तदाह—*अयाज्ययाजकस्तृष्णपपर इति* । *मीमांसकदुर्दुरूढ इति* । 'दुल उत्क्षेपे', दुःपूर्वः औणादिकः कूटप्रत्ययः । 'बहुलमन्यत्रापि' इति णिलुक्, लरयोरेकविषयत्वस्मरणाद् दुर्दुरूढ इति भवति ।

*वैयाकरणश्चौर इति* । कथमेतत्प्रत्युदाहरणम्, यावता चौरत्वेन गर्ह्यमाणत्वाद्भवत्येव वैयाकरणकुत्सा, तत्राह—*न ह्यत्रेति* । प्रत्यासत्तेः शब्दप्रवृत्तिनिमित्तकुत्सायां समासेन भवितव्यम्, अत्र च वैयाकरणः कुत्स्यते चौरत्वेन, न तु वैयाकरणत्वम् । *कुत्सितो ब्राह्मण इति* । अत्र 'विशेषणं विशेष्येण' इति भवितव्यमेव समासेन । यदि नेष्यते, बहुलग्रहणं शरणम् ॥

न्यासः

एवमुच्यते । अत्र हि वैयाकरणत्वं वैयाकरणशब्दस्य प्रवृत्तिनिमित्तं तत् कुत्स्यते, तत् पुनः व्याकरणाध्येतृसम्बन्धः, व्याकरणवेदितृसम्बन्धो वा, तेन हि निमित्तेन वैयाकरणशब्दः पुरुषे वर्त्तते । एवमन्यत्रापि शब्दप्रवृत्तिनिमित्तकुत्सायां समासो वेदितव्यः । **याज्ञिककितव इति** । कितव इव कितवः । यथा हि कितवः किं तवास्तीति धनवत्तामात्रमपेक्षमाणो द्यूते प्रवर्त्तते, न तु तस्य जात्यादिकमपेक्षते; तथा याज्ञिकोऽपि याजने प्रवर्त्तमानो यस्तृष्णयाऽयाज्यस्य धनवत्तामात्रमपेक्षते, न तु तस्य यागार्हतां स याज्ञिकतव इत्युच्यते । अत आह—**अयाज्ययाजनतृष्णापर उच्यत इति** । **मीमांसकदुर्दुरूढ इति** । मीमांसको मीमांसाध्ययनफलमनवाप्य नास्तिको जात इति प्रतीयते ।

**वैयाकरणश्चौर इति** । ननु चौरत्वेन गर्ह्यमाणो वैयाकरणः कुत्सितो भवत्येव । तदभिधायी च वैयाकरणशब्दः । तत् कथमिदं प्रत्युदाहरणमुपपद्यत इत्याह—**न ह्यत्रेत्यादि** । प्रत्यासत्तेर्हि शब्दप्रवृत्तिनिमित्तस्य कुत्सायां समासेन भवितव्यम् । न चेह वैयाकरणशब्दस्य प्रवृत्तिनिमित्तं कुत्स्यते; यस्माच्चौरोऽपि सम्यग् व्याकरणं वेत्त्यधीते वा । तस्मान्नात्र शब्दप्रवृत्तिनिमित्तं कुत्स्यते, किं तर्हि ? यत्र तद् वैयाकर-

### पापाणके कुत्सितैः ॥ ५४ ॥

पापाणकशब्दौ कुत्सनाभिधायिनौ, तयोः पूर्वेण समासे परनिपातः प्राप्तः पूर्वनिपातार्थमिदमारभ्यते। पाप, अणक—एते सुबन्ते कुत्सितवचनैः सह समस्येते, तत्पुरुषश्च समासो भवति। पापनापितः, पापकुलालः। अणकनापितः, अणककुलालः ॥

### उपमानानि सामान्यवचनैः ॥ ५५ ॥

उपमीयतेऽनेनेत्युपमानम्। उपमानवाचीनि सुबन्तानि सामान्यवचनैः सुबन्तैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। उप-

पदमञ्जरी

*उपमानानि सामान्यवचनैः* ॥ *उपमीयतेऽनेनेत्युपमानमिति*। उपपूर्वान्माङः करणे ल्युटि समास इति दर्शयति।' भाष्ये तु मानस्य समीपमुपमानमित्यर्थकथनमात्रम्। अव्ययीभावे उपमानानीति रूपासंसिद्धिप्रसङ्गादिति भावः। उपपूर्वकश्च माङ् सादृश्यहेतुके परिच्छेदे रूढः। येन वस्त्वन्तरं सादृश्येन परिच्छिद्यते तदुपमानम्, तद्यथा—गौरिव गवय इति; गोः करणम्, पुरुषः परिच्छेत्ता; स हि गोः सादृश्येन गवयं परिच्छिनत्ति—गोसदृशो गवय इति। *सामान्यवचनैरिति*। समानशब्दः साधारणपर्यायः, ततश्चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्। साधारणो धर्मः = सामान्यम्, तच्चोपमानस्य श्रुतत्वात्तस्य चोपमेयापेक्षत्वात्त-

न्यासः

गत्वं वर्त्तते स कुत्स्यते, वैयाकरणत्वन्तु तस्योपलक्षणमेव केवलम्; योऽसौ वैयाकरणः स चौरः, यथा—यः कम्पते सोऽश्वत्थ इति। अत्र कम्पनमश्वत्थस्योपलक्षणम्। कुत्सितो ब्राह्मण इति। भवत्यत्र कुत्सितशब्दः कुत्सिताभिधायी। न तु ब्राह्मणशब्दः कुत्सनवचनः ॥

**पापाणके कुत्सितैः** ॥ पापाणकशब्दौ कुत्सनाभिधायिनावित्युक्तम्। यद्येवमत्र पूर्वेणैव सिद्धः समासः, किमर्थमिदमुच्यत इत्याशङ्कयाह—तयोरित्यादि। यदि पूर्वेण स्यात् समासः, ततः कुत्सितशब्दस्य प्रथमानिर्दिष्टत्वात् पूर्वनिपातः स्यात्, पापाणकशब्दयोस्तु परनिपातः। तस्मात् तयोः पूर्वनिपातार्थमिदमारभ्यते। कुत्सितग्रहणं विस्पष्टार्थम्; अन्यथा पूर्वयोगादेव कुत्सित इत्यनुवर्त्तिष्यत इति तन्न कर्त्तव्यमेव स्यात् ॥

**उपमानानि सामान्यवचनैः** ॥ उपमीयतेऽनेनेत्युपमानमिति। सादृश्येन येन परिच्छिद्यते तदुपमानमित्यर्थः। यथा गौरिव गवय इत्यत्र गौरुपमानम्, तेन हि सादृश्येन गवयः परिच्छिद्यते। 'यादृशो गौस्तादृशो गवयः' इत्यर्थः प्रतीयते। सामान्यमनेक-

मानोपमेययोः साधारणो धर्मः = सामान्यम्, तद्विशिष्टोपमेयवचनैरयं समासः। शस्त्रीव श्यामा शस्त्रीश्यामा देवदत्ता। कुमुदश्येनी। हंसगद्गदा। न्यग्रोधपरिमण्डला।

उपमानानीति किम्? देवदत्ता श्यामा।

पदमञ्जरी

योरेव साधारणो धर्मो विज्ञायत इत्याह–*उपमानोपमेययोरित्यादि*। *तद्विशिष्टोपमेयवचनैरिति*। तेन साधारणेन धर्मेण विशिष्टं यदुपमेयं तद्वचनैः, न तु साधारणधर्ममात्रवचनैरित्यर्थः। वचनग्रहणाच्चायमर्थो लभ्यते, सामान्यमुक्तवन्तः= सामान्यवचनाः। ये सामान्यमुक्त्वा तद्वति द्रव्ये पर्यवस्यन्ति ते तथोक्ताः, यथा– गुणमुक्तवान् गुणवचन इति। तच्च सामान्यवदुपमानशब्दस्य संबन्धिशब्दत्वात्तदाक्षिप्तमुपमेयमेव विज्ञायत इति सुष्ठूक्तम्—तद्विशिष्टोपमेयवचनैरिति। *शस्त्रीश्यामेति*। अत्र श्यामगुणविशिष्टत्वेन प्रसिद्धत्वादुपमानं शस्त्री, उपमेया देवदत्ता, तयोः साधारणो धर्मः श्यामत्वम्, तदभिधाय तद्विशिष्टायां श्यामाशब्दः पर्यवस्यतीति भवति सामान्यवचनः।

ननु च समानाधिकरणेनेति वर्त्तते, इह च शस्त्रीशब्दः शस्त्र्यां वर्त्तते, श्यामाशब्दस्तु देवदत्तायाम्, यदाह—'उपमानवाचीनि सुबन्तानि तद्विशिष्टोपमेयवचनैः' इति; तथा विग्रहवाक्ये इवशब्दः प्रयुक्तः—शस्त्रीव श्यामेति? सत्यम्; वचनसामर्थ्यात्तु वैयधिकरण्येऽपि समासः। यद्येवम्, मृगीव चपला मृगचपला, हंसीव गद्गदा हंसगद्गदा, पुंवत्कर्मधारयेति सामानाधिकरण्यलक्षणः पुंवद्भावो न प्राप्नोति? नैष दोषः; जात्यन्तरनिवृत्तिपरायां चोदनायां स्त्रीत्वमकिञ्चित्करम्,

न्यासः

साधारणं भवति; इह चोपमानस्य श्रुतत्वात् तस्य चोपमेयापेक्षत्वादुपमानोपमेययोरेव साधारणो धर्मः सामान्यं विज्ञायत इत्याह–उपमानोपमेययोरित्यादि। **तद्विशिष्टोपमेयवचनैरयं समास इति**। तेन सामान्येन धर्मेण विशिष्टं यदुपमेयं तद्वचनैरयं समासो भवति। कुतः पुनः सामान्यवचनैरित्युक्ते सत्येष विशेषो लभ्यते? न्यायात्। तथा हि– सामान्यमुक्तवन्तः सामान्यवचनाः, यथा–गुणमुक्तवन्तो गुणवचना इति। कदा च ते सामान्यवचना भवन्ति? यदा सामान्यमभिधाय सामान्यविशिष्टे तद्वति द्रव्ये वर्त्तन्ते। तच्च सामान्यवदुपमानस्य सम्बन्धिशब्दत्वादुपमेयमेव विज्ञायत इति न्यायप्राप्त एवार्थो वृत्तिकृता दर्शितः। **शस्त्रीश्यामा देवदत्तेति**। अत्रोपमानं शस्त्री, उपमेया देवदत्ता। प्रसिद्धं ह्युपमानं भवति, नाप्रसिद्धम्। शस्त्र्येव श्यामगुणत्वेन प्रसिद्धा, न देवदत्ता। तयोः सामान्यं साधारणो धर्मः श्यामत्वम्। तत् श्यामत्वमुक्त्वा श्यामशब्दो देवदत्ता-

सामान्यवचनैरिति किम् ? फाला इव तण्डुलाः। पर्वता इव बलाहकाः ॥

पदमञ्जरी

तत्र कुक्कुटाण्डम्, मृगक्षीरमित्यादिवदिदमपि सिद्धम्। ननु चान्यदेव चापलं स्त्रियाः, अन्यदेव पुंसः ? सत्यम्; जातिमात्रोपादानेऽपि प्रकरणादिवशात् स्त्रीत्वं प्रत्यायिष्यते, तच्च बहिरङ्गत्वान्न स्त्रीप्रत्ययस्य निमित्तम्। अन्यथा पुंवद्भावेन निवृत्तौ स्त्रीप्रत्ययस्य तवापि कथं विशेषावगतिः। अस्त्वेवम्, यदि तु मृगीव चपलेति स्त्रीप्रत्ययान्तस्य समासः क्रियते, तदा मृगीचपलेति प्राप्नोति, न हि तेन समासो दण्डवारितः, समानाधिकरणाधिकारश्च बाध्येत। एवं तर्हि समानाधिकरणसमास एवायम्—शस्त्री चासौ श्यामा चेति, कथं पुनर्देवदत्तायां शस्त्रीशब्दः, जातिवचनो ह्यसौ सादृश्यनिमित्तादभेदोपचारात्, यथा—गौर्वाहीक इति। यद्येवम्, शस्त्रशब्दोऽप्युपमेये संक्रान्त इत्युपमानवाचित्वं नोपपद्यते ? सत्यम्; पूर्वावस्थाश्रयेण तूपमानत्वं द्रष्टव्यम्। इवशब्दप्रयोगस्तूपमानप्रदर्शनार्थः, न प्रक्रियावाक्याङ्गमिति न कश्चिद्दोषः।

ननु श्यामगुणत्वेन साधर्म्येण शस्त्रीशब्दो देवदत्तायां प्रयुज्यत इति श्यामशब्दो न प्रयोगार्हः, तन्न; बहवो हि शस्त्र्यां गुणाः—तीक्ष्णा सूक्ष्मा पृथुः श्यामेति, तत्रासति श्यामगुणेन शस्त्रीत्वमारोपितमिति। ननु सदपि श्यामपदं देवदत्तामुपस्थाप्य चरितार्थमिति नेव शस्त्रीगुणो निर्दिश्यते, नैतदस्ति; नेवमत्र वचनं

न्यासः

यामभेदोपचाराद् मतुब्लोपाद्वा वर्त्तत इति सामान्यवचनो भवति। ननु च समानाधिकरणेनेत्यनुवर्त्तते, इह च शस्त्रीशब्दस्य शस्त्र्यां वृत्तिः, श्यामाशब्दस्य देवदत्तायाम्, अतो वैयधिकरण्यात् समासेन न भवितव्यम् ? नैतदस्ति; सर्वत्र ह्युपमानोपमेययोर्भेदात् तद्वाचिनोर्वैयधिकरण्यमेव, उच्यते चेदं वचनम्, अतो वैयधिकरण्येऽपि वचनसामर्थ्यात् समासो भविष्यति।

अथ वा—शस्त्रीशब्दोऽप्यत्र देवदत्तायां वर्त्तते। तेन सामानाधिकरण्य एवायं समासः—शस्त्री चासौ श्यामा चेति शस्त्रीश्यामा। ननु च शस्त्रीशब्दोऽयं जातिवचनः शस्त्रीत्वं प्रवृत्तिनिमित्तमुपादाय तद्वति वर्त्तते, न च तत् शस्त्रीत्वं देवदत्तायामस्ति, तत् कथं तत्र वर्त्तते ? नैष दोषः; 'सर्व एवामी शब्दा गुणमुपादाय तद्वति द्रव्ये वर्त्तन्ते' इत्यपि दर्शनमस्ति। तत्र श्यामत्वं गुणमुपादाय शस्त्रीशब्दो देवदत्तायां वर्त्तिष्यते। ताद्धर्म्याद्वा देवदत्ता शस्त्रीशब्देनाभिधास्यते। भवति हि ताद्धर्म्यात् ताच्छब्द्यमित्युक्तं प्राक्। ताद्धर्म्यं पुनः श्यामगुणत्वम्।

फाला इव तण्डुला इति। भवन्ति हि फाला उपमानम्। तथा हि—तैर्दीर्घत्वादिना सादृश्येन तण्डुला उपमीयन्ते। तण्डुलशब्दस्तु सामान्यवचनो न भवति। ननु

## उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥ ५६ ॥

उपमेयम = उपमितम्, तद्वाचि सुबन्तं व्याघ्रादिभिः सामर्थ्यादुपमानवचनैः सह समस्यते, तत्पुरुषश्च समासो भवति, न चेत्सामान्यवाचो

### पदमञ्जरी

व्यज्यते—या श्यामा सा शस्त्रीवेति। कथं तर्हि शस्त्रीव श्यामा देवदत्तेति? अस्यां तु वचनव्यक्ताविवशब्देन तावदुपमेयनिष्ठत्वेन प्रतीयते, उपमेयनिष्ठो गुण उपमानं स्पृशत्येव। अथ वा—चन्द्रमुखीत्यादावनिर्दिष्टोऽपि गुणः प्रियदर्शनत्वादिः प्रसिद्धिवशादुपमाननिमित्तत्वेन प्रतीयते, तदोपमेयेऽपि तावच्छ्रुतः कथमुपमानं न स्प्रक्ष्यति! *फाला इव तण्डुला*। दीर्घत्वादिना धर्मेण ॥

*उपमितं व्याघ्रादिभिः सामान्याप्रयोगे* ॥ उपमितमित्यत्र भूतकालो न विवक्ष्यत इत्याह—*उपमेयमुपमितमिति*। *सामर्थ्यादिति*। उपमेयमुपमानापेक्षमित्येतत्सामर्थ्येन चेत्सामान्यवाचीति यदा प्रकरणादिवशान्नियतः साधारणगुणः प्रतीयते तदा समासः, यदा तु गुणान्तरव्यवच्छेदाय विशिष्टः साधारणगुणवचनः शब्दः प्रयुज्यते तदा न समास इत्यर्थः। *पुरुषोऽयं व्याघ्र इवेति*। उपमानप्रदर्शनमेतत्, अत्र हि वैयधिकरण्यात्समासस्याप्रसङ्गः। यदा तु व्याघ्रशब्दस्ताद्धर्म्यात्पुरुषे वर्त्तते तदा

### न्यासः

च तण्डुलशब्दोऽपि तण्डुलत्वं सामान्यमुपादाय तद्वति द्रव्ये वर्त्तत इति भवत्येव सामान्यवचनः, तदयुक्तमिदं प्रत्युदाहरणम्? नैतदस्ति; तथा ह्युपमानोपमेययोः साधारणो धर्मः सामान्यमित्युक्तम्। न च तण्डुलत्वं फालानामस्ति, किं तर्हि? तण्डुलानामेव ॥

उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥ सामर्थ्यादुपमानवचनैरिति। यद्यपि 'उपमानवचनैः' इति सूत्रे नोपात्तं तथाप्युपमेयमुपमानापेक्षमित्युपमितशब्दः सम्बन्धिशब्दत्वादुपमानत्वं व्याघ्रादीनां गमयति। तेन विशेषानभिधानेऽपि सामर्थ्यादुपमानवचनैस्तैः समासो विज्ञायते। न चेत् सामान्यवाची शब्दः प्रयुज्यत इति। उपमानोपमेययोः साधारणो धर्मः, शौर्यादि, सामान्यम्। यदि तद्वाची शब्दो न प्रयुज्यते, एवं सति समासो भवति; नान्यथा। ननु च सामान्यस्य समासेऽन्तर्भूतत्वात् तद्वाचिनां शब्दानां प्रयोगो नास्ति, तत् किं प्रतिषेधेन? नैतदस्ति; साधारणधर्मः सामान्यं हि समासेऽन्तर्भूतम्, न तु तद्विशेषः। तत्रासति प्रतिषेधे विशिष्टसाधारणधर्मवाचिनः प्रयोगः स्यादेवेति कर्त्तव्यः प्रतिषेधः? न कर्त्तव्यः, कथम्? सामान्यशब्दप्रयोगे हि सति तदपेक्षत्वेन सापेक्षमसमर्थं भवतीत्यसामर्थ्यादेव समासो न भविष्यति। एवं तर्ह्येतज् ज्ञापयति—'भवति हि प्रधानस्य सापेक्षस्यापि समासः' इति। पुरुषश्चात्रोपमेयत्वात्

शब्दः प्रयुज्यते । 'विशेषणं विशेष्येण' इति परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थं आरम्भः। पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः। पुरुषसिंहः ।

सामान्याप्रयोग इति किम् ? पुरुषोऽयं व्याघ्र इव शूरः ।

व्याघ्र । सिंह । ऋक्ष । ऋषभ । चन्दन । वृक्ष । वृष । वराह । हस्तिन् । कुञ्जर । रुरु । पृषत । पुण्डरीक । बलाहक । आकृतिगणश्चायम् । तेनेदमपि भवति–मुखपद्मम्, मुखकमलम्, करकिसलयम्, पार्थिवचन्द्रः इत्येवमादि ॥

**विशेषणं विशेष्येण बहुलम् ॥ ५७ ॥**

भेदकम् = विशेषणम्, भेद्यम् = विशेष्यम् । विशेषणवाचि सुबन्तं

**पदमञ्जरी**

सामानाधिकरण्ये सति समासः। अत एवोक्तम्–*विशेषणं विशेष्येणेति प्राप्ते इति* । *पुरुषोऽयं व्याघ्र इव शूर इति*। ननु सामान्यशब्दप्रयोगे सति तदपेक्षत्वादसामर्थ्यादेव न भविष्यति, एवं तर्ह्येतज्ज्ञापयति—भवति प्रधानस्य सापेक्षस्य वृत्तिरिति। तेन राजपुरुषोऽभिरूप औपगवः शोभन इत्यादि सिद्धं भवति। न्यायसिद्ध एवार्थे लिङ्गदर्शनमिदम् । प्राधान्यादेवानेकोपकार्यत्वसम्भवात्पुरुषव्याघ्रोऽभिरूप इति भवत्येव। शौर्यं ह्यत्र समानधर्मः, नाभिरूप्यम्। अत एव 'सामान्याप्रयोगे' इत्युक्तम्, न तु 'गुणाप्रयोगे' इति ॥

*विशेषणं विशेष्येण बहुलम्* ॥ *भेदकमिति* । असिश्छिनत्तीतिवत् करणस्य कर्तृत्वविवक्षायां ण्वुल् । *विशेषणमिति* । 'शिषॢ शेषणे' विपूर्वः, विशेष्यतेऽनेनेति

**न्यासः**

प्रधानः, उपमानन्तु व्याघ्रादि तदर्थत्वादप्रधानम्। किमेतेन ज्ञापकेन प्रयोजनम् ? 'राजपुरुषः शोभनः' इत्येवमादि सिद्धं भवति। विशेषणं विशेष्येणेति प्राप्त इति। ननु च विशेषणस्य विशेष्येण समानाधिकरणेन समासं वक्ष्यति, उपमानोपमेययोश्च भेदाद्वैयधिकरण्यम्, तत् कुतो विशेषणं विशेष्येणेति प्राप्तिः ? एवं मन्यते—पुरुषादावुपमेये वर्त्तमानैर्व्याघ्रादिभिरुपमानशब्दैरयं समासो भवति। यथा चोपमानशब्दानामुपमेयवृत्तित्वे सामानाधिकरण्यं तथा पूर्वसूत्र एव व्याख्यातम् ॥

**विशेषणं विशेष्येण बहुलम्** ॥ भेदकं विशेषणमिति । 'शिष्लृ विशरणे' इत्यस्माद् धातोर्विपूर्वात् करणे ल्युट्। विशिष्यतेऽनेनेति विशेषणम्। तस्येदं लक्षणम्—भेदकमिति । यत् सामान्याकारेण प्रवृत्तमनेकप्रकारवद् वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्यैकत्र प्रकारे व्यवस्थापयति, तद् भेदकं विशेषणमिति। भेद्यं विशेष्यमिति।' विशेषणीयं

विशेष्यवाचिना समानाधिकरणेन सुबन्तेन सह बहुलं समस्यते, तत्पुरुषश्च समासो भवति । नीलोत्पलम् । रक्तोत्पलम् । बहुलवचनं व्यवस्थार्थम् । क्वचिन्नित्यसमास एव–कृष्णसर्पः, लोहितशालिः । क्वचिन्न भवत्येव–रामो जामदग्न्यः, अर्जुनः कार्त्तवीर्यः । क्वचिद्विकल्पः–नीलमुत्पलम्, नीलोत्पलम् ।

## पदमञ्जरी

विशेषणम्, करणे ल्युट् । यत्साधारणाकारेण प्रतिपन्नं बहुप्रकारं वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्य एकस्मिन्प्रकारे व्यवस्थापयति तत्पदं विशेषणं भेदकमिति चोच्यते । व्यवस्थाप्यमानं विशेष्यं भेद्यमिति च । ननु च विशेषणं विशेष्यमिति च सम्बन्धिशब्दावेतौ, ततश्च विशेषणमित्युक्ते गम्यत एव—विशेष्येणेति, एवं विशेष्येणेत्युक्ते गम्यते—विशेषणमिति, तत्किमर्थमुभयमुपादीयते ? यत्र पूर्वोत्तरपदयोर्द्वयोरपि प्रत्येकं विशेषणविशेष्यभावस्तत्रैव यथा स्याद्, यथा—नीलोत्प-

## न्यासः

विशेष्यम् । विपूर्वात् तस्माद्धातोः 'ऋहलोर्ण्यत्' इति कर्मणि ण्यत् । तस्येदं लक्षणम्—भेद्यमिति । यदनेकप्रकारवद्वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्यैकत्र प्रकारे व्यवस्थाप्यते तद् भेद्यं विशेष्यमिति । अथ किमर्थं विशेषणविशेष्ययोरुभयोरुपादानं क्रियते ? न; अन्यतरस्यैव क्रियेत, सम्बन्धिशब्दत्वाद्धि तयोरन्यतरोपादानेनैवेतरस्याप्यवगतिर्भवत्येव ? सत्यमेतत्; यत्र पूर्वोत्तरपदे प्रत्येकं विशेषणविशेष्यभूते भवतस्तत्रैव समासो भवतीति ज्ञापनार्थमुभयोरुपादानम्, यथा—नीलोत्पलमिति । अत्र नीलार्थो भ्रमरादिभ्यो व्यावर्त्योत्पलार्थेनोत्पले व्यवस्थाप्यते । उत्पलार्थोऽपि रक्तोत्पलादिभ्यो व्यावर्त्य नीलार्थेन नीले व्यवस्थाप्यत इत्यस्ति प्रत्येकं विशेषणविशेष्यभावः । स यत्र नास्ति तत्र तु न समासः, यथा—वृक्षः शिंशपेति । वृक्षो हि शिंशपात्वं व्यभिचरति, शिंशपा तु न वृक्षत्वम् । अतस्तत्प्रकारान्तरेभ्यः पलाशादिभ्यस्तं व्यवच्छिनत्तीति शिंशपा तस्य विशेषणं भवति, न तु विशेष्यम् । वृक्षस्तु विशेष्यः । शिंशपार्थस्तु वृक्षत्वं न व्यभिचरतीति न तस्यासौ विशेषणं भवति । अथ किं न भवितव्यमेव शिंशपावृक्षः, आम्रवृक्ष इति ? विशेषणसमासेन भवितव्यम्, यदा शिंशपादिशब्दानां विशेषे वृत्तिर्नावधार्यते । तथा हि—शिंशपादिशब्दाः फलस्य वृक्षस्य मूलस्य च वाचकाः सामान्यशब्दा इति तदर्थानां वृक्षत्वव्यभिचाराद्विशेष्यभावः, वृक्षश्च विशेषणं भवति । यदा तु कुतश्चित् प्रकरणादर्थाद्वा वृक्षाद्यर्था एवावसितवृत्तयो भवन्ति तदा न भवितव्यम् । ननु च वृक्षार्थावसितवृत्तित्वाद्वृक्षशब्दस्य तदा प्रयोग एव नोपपद्यते, उक्तार्थत्वात्, 'उक्तार्थानामप्रयोगः' इति वचनात्, ततश्च

## पदमञ्जरी

लमिति। अत्र हि नीलार्थो भ्रमरादिसाधारणरूपेण प्रतिपन्न उत्पलार्थेनोत्पले व्यवस्थाप्यते, उत्पलार्थो हि रक्तादिसाधारणरूपेण प्रतिपन्नो नीलार्थेन नीले व्यपस्थाप्यत इति भवति प्रत्येकमुभयभावः।

## न्यासः

समासस्याप्रसङ्ग एव, तत् किं तन्निवृत्त्यर्थेनोभयग्रहणेन ? नैतदेवम्; क्वचिदुक्तार्थानामपि लोके प्रयोगो दृश्यते, यथा—अपूपौ द्वावानयेति।

यदि तर्हि यत्रोभयोः प्रत्येकं विशेषणविशेष्यभावस्तत्र समासेन भवितव्यम्, एवं सति प्रत्येकमुपसर्जनत्वं स्यात्, उभयोरपि विशेषणत्वात्, विशेषणस्येह सूत्रे प्रथमानिर्दिष्टत्वात्, ततश्चोत्पलनीलमित्यपि स्यात्, नीलोत्पलमिति तु सर्वदैवेष्यते ? नैष दोषः; यस्मादेकतरं प्रधानम्, इतरदप्रधानम्। द्वयोः प्राधान्ये परस्परानुपकारित्वादसम्बन्धयोरेकत्र प्रयोगो न स्यात्। अप्राधान्येऽपि द्वयोः प्रधानापेक्षावतोर्नास्ति परस्परोपकारित्वमिति न स्यादेवैकत्र प्रयोगः। तस्मादेकमत्र प्रधानम्, अपरं त्वप्रधानम्। यच्चाप्रधानम् तदेवोपसर्जनसंज्ञं भवति, नेतरत्; अन्वर्थत्वादुपसर्जनसंज्ञायाः—उप= समीपे विशेष्ये स्वार्थं सृजति = क्षिपतीति। नीलशब्दश्चाप्रधानम्, तदर्थस्य गुणस्याप्राधान्यात्; उत्पलशब्दस्तु प्रधानम्, तदर्थस्य द्रव्यस्य प्राधान्यात्। तस्मान्नीलशब्द एवोपसर्जनम्, नोत्पलशब्द इति न भवति पूर्वोक्तदोषावसरप्रसङ्गः। यत्रोभावपि गुणशब्दौ तत्र पर्यायेणोपसर्जनभावः, यथा—कुब्जखञ्जः, खञ्जकुब्ज इति।

अथ कुतोऽत्र द्रव्यस्य प्राधान्यमवसितम् ? उच्यते; यथा—श्वेतं छागमालभेतेत्यस्यां देशनायां श्वेतगुणस्याभावेऽन्यवर्णस्यापि च्छागस्यालम्भनाच्छागाभावे श्वेतगुणस्यान्यद्रव्यस्यानालम्भनाच्च। न हि च्छागाभावे पिष्टकपिण्डीमालभ्य याज्ञिकः कृती भवति। यदि च प्रधानं गुणः स्यात् तदा यथा छागाभावे पिष्टकपिण्डो नालभ्यते, तथा श्वेतगुणाभावेऽन्यगुणोऽपि च्छागो नालभ्यते। न च स नालभ्यते, तस्माद् द्रव्यमेव प्रधानम्, न गुण इति। ननु चोत्पलशब्दोऽपि नैव द्रव्यशब्दः, जातिनिमित्तत्वात्, तत् कथमस्य प्राधान्यम् ? अथ जातिमतो द्रव्यस्याभिधानाज् जातिशब्दोऽपि द्रव्यशब्दोऽयमिति व्यवस्थाप्यते। एवं नीलशब्देऽप्यतिप्रसङ्गः, सोऽपि हि गुणनिमित्तो नीलगुणद्रव्यस्याभिधानाद् द्रव्यशब्दः स्यात् ? नैष दोषः; जातिर्हि द्रव्यस्योत्पत्तेः प्रभृत्याविनाशात् स्वाधारं द्रव्यं नैव जहाति। अतोद्रव्यात्मभूतत्वाज्जातेस्तन्निमित्तकः शब्दो द्रव्यशब्दो व्यवस्थाप्यते। गुणाः पुनरपायिनोऽनपायिनो वा सत्येतस्मिन् द्रव्ये वर्त्तन्ते निवर्त्तन्ते च। तस्मान्नैते द्रव्यात्मभूता इति न तन्निमित्तशब्दो द्रव्यशब्दो व्यवस्थाप्यत इत्यलमतिप्रसङ्गेन।

## पदमञ्जरी

यत्र तु स नास्ति न तत्र समासो भवति, यथा प्रत्युदाहरणे—तक्षकः सर्प इति, न हि तक्षकः सर्पत्वं व्यभिचरति। ननु व्यभिचरति, क्रियानिमित्तकोऽपि तक्षकशब्दोऽस्ति—तक्ष्णोतीति तक्षक इति ? सत्यमस्ति; न त्वसौ नामधेयेन गाहते तुल्यकक्षताम्, प्रागेव रूढौ प्रतिभा क्रियाशब्दे विलम्बिता। इह तु शिंशपा-वृक्ष इति, शिंशपाशब्दस्य फलेऽपि दर्शनाद्वृक्षव्यभिचाराद्भवत्येव समासः, न चात्र वृक्षप्रतीतिपूर्विका फले प्रतीतिर्येन बहिरङ्गा स्यात्। यथैव हि पञ्चालादयः शब्दा जनपदिनां जनपदस्य च साधारण्येनान्योऽन्ययोगमपेक्षन्ते तद्वदेतेऽपि। यथोवाच भगवान्–'लुब्योगाप्रख्यानात्' इति। इह तर्हि कथम् 'अथ जयाय नु मेरुमहीभृतः' इति, न मेरुर्महीभृत्त्वं व्यभिचरति ? निरंकुशाः कवयः।

यदि तर्हि यत्र प्रत्येकमुभयभावस्तत्र समासः, उभयोरपि विशेषणत्वमिति प्रथमानिर्दिष्टत्वादुपसर्जनत्वे सति पूर्वनिपातानियमः स्याद्–नीलोत्पलम्, उत्पल-नीलमिति, नैष दोषः; 'उपसर्जनम्' इत्यन्वर्थसंज्ञेयमप्रधानमुपसर्जनमिति ? अर्थं तश्चाप्राधान्यम्। तदिह द्रव्यगुणोपनिपाते द्रव्यं प्रधानम्, अप्रधानं गुणः। द्रव्यं हि क्रियासिद्धौ साक्षादुपयुज्यते, गुणस्तु द्रव्यावच्छेदद्वारेण। अतो गुणवचनस्यैव पूर्वनिपातः, न द्रव्यवचनस्य। ननूत्पलशब्दोऽपि जातिशब्दः, न द्रव्यशब्दः; यदि तु जातिविशिष्टे द्रव्ये पर्यवसानाद् द्रव्यशब्दत्वम्, हन्तैवं नीलशब्दोऽपि गुणिविशिष्टे द्रव्ये पर्यवस्यन् द्रव्यशब्दः स्यात् ? अत्रोच्यते–उत्पत्तेः प्रभृत्या विनाशाज्जातिर्द्रव्यं न जहाति, शब्देन च द्रव्याव्यतिरेकेण जातिः प्रत्याय्यते—शाबलेयो बाहुलेयो गौरिति, न तु भवति शाबलेयस्य गौरिति। तस्माज्जात्यात्मकमेव द्रव्यं प्रतीयत इति जातिशब्दो द्रव्यत्वेन व्यवस्थाप्यते। गुणाः पुनः सत्येव द्रव्ये कदाचिदुपयन्ति, कदाचिदपयन्ति—पटस्य शुक्ल इति, व्यतिरिक्ता अपि द्रव्यात्स्वशब्दैः प्रत्याय्यन्त इति न गुणात्मकं द्रव्यं भवतीति न गुणशब्दो द्रव्यशब्दत्वे व्यवस्थातुमर्हति। अत एव 'श्वेतं छागमालभेत' इति चोदनायां श्वेताभावे कृष्णश्छाग आलभ्यते, न तु छागाभावे पिष्टपिण्डीमालभ्य कृती भवति। क्रियाद्रव्ययोरुपनिपातेऽप्येवमेव द्रष्टव्यम्—याचकब्राह्मण इति।

यत्र तु गुणशब्दयोः, क्रियाशब्दयोः, गुणक्रियाशब्दयोश्चोपनिपातः, तत्रा-नियम एव भवति—खञ्जकुब्जः, कुब्जखञ्जः; पाचकपाठकः. पाठकपाचकः;

## न्यासः

**तक्षकः सर्प इति।** ननु च तक्षकः सर्पस्य विशेषणं भवत्येव, तथा हि–सर्प इत्युक्ते सर्पसमान्यं प्रतीयते, न सर्पविशेषः। तक्षकः सर्प इत्युक्ते सर्पविशेषोऽतक्षकाद् व्यावृत्तोऽवसीयते, तदयुक्तं प्रत्युदाहणमेतत्, नैतदस्ति; उक्तं ह्येतत्—यत्रैकैकस्यो-भयत्र भावस्तत्र समास इति। न तु कदाचित् सर्पार्थस्य तक्षको विशेष्यो भवति।

विशेषणमिति किम् ? तक्षकः सर्पः ।
विशेष्येणेति किम् ? लोहितस्तक्षकः ॥

**पदमञ्जरी**

खञ्जपाचकः, पाचकखञ्ज इति । *शिंशपावृक्ष इति* । द्रव्यशब्दयोरेवोपनिपातेऽपि वृक्षत्वस्य व्यापकत्वान्महाविषयत्वाद् दूरात्प्रथमत एवोपलम्भाच्च प्राधान्यम्, शिंशपात्वस्य तु विपर्ययादप्रधान्यमिति न तत्राप्यनियमः ।

*विशेषणमिति किमिति* ॥ विशेष्यशब्दस्य सम्बन्धिशब्दत्वादेव विशेषणमिति लप्स्यत इति प्रश्नः । *तक्षकः सर्प इति* । ननु तक्षकशब्दोऽपि विशेषणं भवत्येव ? एवं मन्यते—विशेष्यशब्दस्य सम्बन्धिशब्दत्वादेव पूर्वपदस्य विशेषणत्वे लब्धे पुनर्विशेषणग्रहणमुत्तरपदस्य विशेषणत्वप्रतिपत्त्यर्थम्—विशेष्येण विशेषणं समस्यते, तच्चेद्विशेष्यं विशेषणमिति । न चात्रोत्तरपदं विशेषणम्; तक्षकस्य सर्पत्वाव्यभिचारादिति । *लोहितस्तक्षक इति* । नात्र तक्षको विशेष्यः, तस्य लोहितत्वाव्यभिचारात् । यद्येवम्, लोहितो विशेषणं न स्यात्; तस्यापि विशेष्यापेक्षत्वात् ? एवं तर्हि 'पाठक्रमादर्थक्रमो बलीयान्' इति तक्षको लोहित इति पाठो द्रष्टव्यः, अत्र हि तक्षको विशेषणं भवति; लोहितत्वस्य तक्षकत्वव्यभिचारात् । यद्येवम्, लोहितत्वस्य विशेष्यत्वमपि स्यात् ? अस्त्येव तस्य विशेष्यत्वम्, पूर्वपदस्य तु विशेष्यत्वाभावात्प्रत्युदाहरणत्वम् । एवं च कृत्वा तक्षकः सर्प इत्येतदेवास्मिन्नपि प्रश्ने प्रत्युदाहरणं भवति । विस्पष्टार्थं तूभयोरुपादानम् ॥

**न्यासः**

कथं न भवति ? तक्षकस्य सर्पत्वाव्यभिचारात् । ननु च तक्षकशब्दोऽस्ति नामधेयशब्दः, अस्ति च क्रियाशब्दः—तक्ष्णोतीति तक्षक इति; उभयोर्भिन्न एवार्थः, तत्र तक्षकशब्दस्यानेकप्रकारत्वेन प्रकारान्तरनिवृत्तये युज्यत एव सर्पस्य तक्षकोऽपि विशेष्यः ? नैतदस्ति; न नामधेयस्य क्रियाशब्देन तुल्यमर्थाभिधानसामर्थ्यम् । अवयवार्थानुसारेण हि क्रियाशब्दोऽर्थं बोधयति, समुदायरूपेण तु नामधेयम् । अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति तस्यां सत्यां क्रियाशब्दार्थविषयापेक्षा नोपजायत एव । **लोहितस्तक्षक इति** । भवति लोहितो विशेषणम्, न तु तक्षको विशेष्यम् ; तस्य लोहितत्वाव्यभिचारात् । यदि तर्हि तक्षको न विशेष्यः, लोहितोऽपि विशेषणं न स्यात्; विशेषणस्य विशेष्यापेक्षत्वात् । न च शक्यं तक्षकाद् यदर्थान्तरं पटादिकं विशेष्यं तदपेक्षया लोहितस्य विशेषणत्वं परिकल्पयितुम् । एवं हि लोहिताद् यदर्थान्तरं तीव्रविषादिकं विशेषणं तदपेक्षं तक्षकस्यापि विशेष्यत्वं प्रसज्येत । तस्माद विस्पष्टार्थमुभयोर्ग्रहणमित्यपरे ॥

## पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ॥ ५८ ॥

पूर्व, अपर, प्रथम, चरम, जघन्य, समान, मध्य, मध्यम, वीर- इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति । पूर्वपुरुषः । अपरपुरुषः । प्रथमपुरुषः । चरमपुरुषः । जघन्यपुरुषः । समानपुरुषः । मध्यपुरुषः । मध्यमपुरुषः । वीरपुरुषः । पूर्वस्यैवायं प्रपञ्चः ।

## श्रेण्यादयः कृतादिभिः ॥ ५९ ॥

श्रेण्यादयः सुबन्ताः कृतादिभिः समानाधिकरणैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति ।

* श्रेण्यादिषु च्व्यर्थवचनं कर्तव्यम् * । अश्रेणयः श्रेणयः कृताः श्रेणिकृताः । एककृताः । श्रेण्यादयः पठ्यन्ते । कृतादिराकृतिगणः । च्व्यन्तानां तु 'कुगतिप्रादयः' इत्यनेन नित्यसमासः । श्रेणीकृताः ।

### पदमञ्जरी

*पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च* ॥ *पूर्वस्यैवायं प्रपञ्च इति* । गुणक्रियाशब्देन सह समासे पूर्वादीनां पूर्वनिपातनियमार्थं तु न भवति, बहुलग्रहणेनैव सिद्धत्वादिति मन्यते ॥

*श्रेण्यादयः कृतादिभिः* ॥ एकेन शिल्पेन पण्येन वा येजीवन्ति, तेषां समूहः= श्रेणिः । तत्र पृथक्स्थितानां श्रेणिकरणे यथा स्यात्, श्रेणिस्थानामेव तु दण्डादिरूपेण करणे मा भूदित्याह–*श्रेण्यादिषु च्व्यर्थवचनमिति* । *श्रेण्यादयः पठ्यन्ते इति* । तेन तत्रादिशब्दो व्यवस्थावाची । *कृतादिराकृतिगण इति* । प्रयोगदर्शनेनाकृतिग्राह्यो गणः=आकृतिगणः । अत्रादिशब्दः प्रकारे । *च्व्यन्तानामित्यादि* । परत्वा-

### न्यासः

पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ॥ पूर्वस्यैवायं प्रपञ्च इति । तेनैव सिद्धत्वात् । अस्ति ह्यत्रापि प्रत्येकं पूर्वोत्तरपदयोर्विशेषणविशेष्यभावः ॥

श्रेण्यादयः कृतादिभिः ॥ श्रेण्यादिषु च्व्यर्थवचनमिति । अभूततद्भावे वर्त्तमानानां समासो यथा स्यात् । यदा हि श्रेण्यादिशब्दानामर्था अपरिनिष्पन्ना एव निष्पाद्यन्ते तदा समास इष्यते । यदा तु निष्पन्ना एव ते रूपान्तरेण क्रियन्ते तदा श्रेणयः कृता दण्डिताः सत्कृता वेत्येवमाद्यर्थविवक्षायां नेष्यते । कृतशब्दस्य दण्डितादि-

श्रेणि । एक । पूग । कुण्ड । राशि । विशिख । निचय । निधान । इन्द्र । देव । मुण्ड । भूत । श्रवण । वदान्य । अध्यापक । ब्राह्मण । क्षत्रिय । पटु । पण्डित । कुशल । चपल । निपुण । कृपण । इति श्रेण्यादिः ॥

कृत । मित । मत । भूत । उक्त । समाज्ञात । समाम्नात । समाख्यात । संभावित । अवधारित । निराकृत । अवकल्पित । उपकृत । उपाकृत । इति कृतादिः ॥

**क्तेन नञ्विशिष्टेनानञ् ॥ ६० ॥**

पदमञ्जरी

दिति भावः । आकृतिगणेऽप्युदाहरणरूपेण कतिपयान्पठति । कृत...*मतेत्यादि* ॥

क्तेन *नञ्विशिष्टेनानञ्* ॥ विशिष्टशब्दोऽयमधिके वर्त्तते, तच्चाधिक्यं क्वचित्सावधारणम्, तद्यथा—देवदत्तो यज्ञदत्तात्स्वाध्यायेन विशिष्टः, स्वाध्यायेनैव विशिष्टोऽन्ये गुणाः समा इति गम्यते । क्वचिन्निरवधारणम्, तद्यथा—देवदत्तो यज्ञदत्तात्स्वाध्यायेन विशिष्टः, स्वाध्यायेन तावद्विशिष्टोऽन्ये गुणाः समा भूयांसो वा नेतन्निरूप्यते । वाक्यस्यैकरूपत्वेऽर्थप्रकरणादिना विशेषनिर्णयः । तत्र निरव-धारणपक्षे—सिद्धं च तदभुक्तं चेत्यत्रापि स्यात्, क्रान्तयोः प्रकृतिभेदेऽपि नञ् तावदधिक इति विशिष्टग्रहणं चानर्थकं स्यात्, क्तेन सनञा नञित्येव वाच्यं स्यात्, अतः सावधारणपक्षमाश्रित्याह—*नञैव विशेषो यस्येति* । प्रकृत्याधिक-

न्यासः

शब्दानामर्थेषु वृत्तिर्न सम्भवतीत्येतच्च नाशङ्कनीयम्; करोतेः क्रियासामान्यवाचित्वात् । अनेकार्थत्वाद्वा धातूनाम् । श्रेण्यादिषु च्व्यर्थवचनमित्यस्यायमर्थः—च्व्यर्थ उच्यते = प्रत्याख्यते येन तच्च्व्यर्थवचनम् । कर्त्तव्यमिति । येन श्रेण्यादिषु समासकारणत्वेनोपात्तेषु च्व्यर्थता प्रतिपद्यते तद्व्याख्यानं कर्त्तव्यमित्यर्थः । तत्रेदं व्याख्यानम्—बहुलग्रहणमिहानुवर्तते, तेन च्व्यर्थानामेव समासो भवतीति नाच्व्यर्थानाम् । च्व्यन्ता-नामित्यादि । च्वेर्विकल्पेन विधानाद् द्विविधाश्च्व्यर्थाः—च्व्यन्ताः, अच्व्यन्ताश्च । तत्र ये श्रेण्यादयोऽच्व्यन्तास्तेषामनेन समासः । च्व्यन्तानाम् तु 'ऊर्य्यादिच्विडाचश्च' इति गतिसंज्ञायां सत्यां परत्वात् 'कुगतिप्रादयः' इति समासो भविष्यतीति ॥

क्तेन नञ्विशिष्टेनानञ् ॥ अयं विशिष्टशब्दोऽस्त्येव सावधारण आधिक्ये वर्तमानः, यथा—देवदत्तयज्ञदत्तावाढ्यावभिरूपौ प्रेक्षावन्तौ । देवदत्तस्तु यज्ञदत्तात् स्वाध्यायेन विशिष्टः, स्वाध्यायेनैवाधिक इति गम्यते । अन्ये तु गुणाः समाना एव भवन्ति । अस्ति च निरवधारण आधिक्ये वर्तमानः, यथा—देवदत्तयज्ञदत्तावाढ्यावभिरूपौ

नञैव विशेषो यस्य सर्वमन्यत्प्रकृत्यादिकं तुल्यं तन्नञ्विशिष्टम्, तेन नञ्विशिष्टेन क्तान्तेन समानाधिकरणेन सह अनञ् क्तान्तं समस्यते, तत्पुरुषश्च समासो भवति। कृतं च तदकृतं च कृताकृतम्। भुक्ता-

पदमञ्जरी

मित्यादिशब्देन प्रत्ययोपसर्गयोर्ग्रहणम् तत्र सिद्धं च तदभुक्तं चेति प्रकृतिरतुल्या, कर्त्तव्यमकृतमिति प्रत्ययः, प्रकृतं चानपकृतं चेत्युपसर्गः, एवं च पूर्वपदमपि क्तान्तमेव लभ्यत इत्याह—*अनञ्क्तान्तमिति*। अनञिति शक्यमकर्त्तुम्, न हि पूर्वपदे सनञि उत्तरपदे नञधिको भवति। *कृतं च तदकृतं चेति*। अवयवधर्मेणायं समुदायस्य व्यपदेशः, एकमेव च वस्त्वेकदेशकरणात्कृतं च भवत्येकदेशाकरणादकृतं चेति नात्र कश्चिद्विरोधः। यदि तर्हि सावधारणपक्ष आश्रीयते, एवं सति यस्य नुडपरोऽधिक इडागमो वा, तेन सह समासो न स्यादित्यत आह—*नुडिटाविति*। नुडिड्ग्रहण-मागमोपलक्षणम्, न्यायस्य तुल्यत्वात्तेनच्छन्नाच्छन्नमिति तुगधिकस्यापि ग्रहणम्। *अशितानशितेनेति*। 'अश भोजने', 'तस्मान्नुडचि'। *क्लिष्टाक्लिशितेनेति*। 'क्लिशः क्त्वानिष्ठयोः' इति पक्षे इट्; तत्र नुट् प्रत्ययान्तभक्तः, इट् प्रत्ययभक्तस्तुक् नञ्भक्त इति सर्वेषामुत्तरपदेऽन्तर्भावः। इह तु छाताच्छितमिति 'शाच्छोरन्यतरस्याम्' इतीत्त्वे कृते तेनाधिक्यात्समासो न प्राप्नोति ? अत्र केचिदाहुः—नुडिड्ग्रहण-मर्थाभेदकस्य विकारमात्रस्योपलक्षणम्, तेनेहापि समासो भवतीति। त्रातात्राण-मित्यत्र तु निष्ठानत्वस्यासिद्धत्वाद्भेदकत्वाभावः, गौणत्वात्सामानाधिकरण्यस्य पूर्वेण न प्राप्नोतीत्यारम्भः। पूर्वनिपातनियमार्थश्च—कृताकृतमित्येव यथा स्यात्, अकृतमिति मा भूत्।

न्यासः

प्रेक्षावन्तौ। देवदत्तस्तु यज्ञदत्तात् स्वाध्यायेन विशिष्टः, स्वाध्यायेनाधिक इति गम्यते। अन्ये तु गुणाः समाना भूयांसो वा, ते न विवक्षिता भवन्ति। यद्यपि चाभिन्नरूपमेव वाक्यद्वयमेतत्, तथापि प्रकरणादेः कुतश्चिदर्थभेदो गम्यते, यथा—आराच्छब्दे दूरान्तिकार्थभेदः। तत्र यदि निरवधारण आधिक्ये वर्त्तमानो विशिष्ट-शब्दो गृह्येत, तदा सिद्धश्च तदभुक्तश्चेत्यत्रापि स्यात्, अस्त्यत्र नञाधिकं क्तान्तम्। तस्मात् सावधारण आधिक्ये वर्तमानं विशिष्टशब्दं परिगृह्याह—नञैव विशेषो यस्ये-त्यादि। प्रकृत्यादिकमिति। आदिशब्देन प्रत्ययोपसर्गयोः परिग्रहः। अनञिति। अविद्यमानो नञ् यस्मिन् क्तान्ते तदनञ्। कृतञ्च तदकृतञ्चेति। कथं पुनरेकमेव वस्तु कृतं स्यादकृतञ्च ? अवयवधर्मेण समुदायस्य तथा व्यपदेशाददोषः। कृतभाग-सम्बन्धात् कृतम्, अकृतभागसम्बन्धात् तदेवाकृतमित्युच्यते। अथ वा—यदर्थं कृतं तत्रासामर्थ्यादकृतम्, यथा—पुत्रकार्यासामर्थ्यात् पुत्रोऽप्यपुत्र इति। यदि नञैव

भुक्तम् । पीतापीतम् । उदितानुदितम् । नुडिटौ तद्भक्तत्वान्नैव भेदकौ । अशितानशितेन जीवति । क्लिष्टाक्लिशितेन वर्त्तते ।

* कृतापकृतादीनामुपसंख्यानम् * । कृतापकृतम् । भुक्तविभुक्तम् । पीतविपीतम् । गतप्रत्यागतम् । यातानुयातम् । क्रयाक्रयिका । पुटापुटिका । फलाफलिका । मानोन्मानिका ॥

पदमञ्जरी

*कृतापकृतमिति* । एकदेशस्येष्टस्य करणादेकदेशस्य चानिष्टस्य करणादेकमेव वस्तु कृतं च भवत्यपकृतं च । भुक्तं च तदत्यवहृतत्वात्, विभुक्तं चाशोभनत्वाद्भुक्तविभुक्तम्, विशब्दोऽत्राशोभनत्वं द्योतयति विरूपवत् । एवं *पीतविपीतम्* । गमनम्=गतम्, प्रत्यागमनम्=प्रत्यागतम्, तत् क्षुण्णभुवा प्रत्यागमनेन सह चरितं गमनं *गतप्रत्यागतम्*, यातं च तदनुयातं च तदानीमेव पुनर्गमनात् *यातानुयातम्* । *क्रयाक्रयिकेति* । 'अल्पे' इति कप्रत्ययः, तदन्तश्च स्वभावात्स्त्रियां वर्त्तते । क्रयाक्रयिकेति 'अन्येषामपि दृश्यते' इति दीर्घः । महान् क्रयः क्रयशब्देनोच्यते गोबलीवर्दन्यायेन । एवं *पुटापुटिका, फलाफलिका, मानोन्मानिकेति* ।

न्यासः

विशेषो यस्य सर्वमन्यत् प्रकृत्यादिकं तुल्यं तेन समासः, एवं सति यस्य नुडप्यधिक इडागमो वा, तेन सह समासो न भवतीत्याह—नुडिटावित्यादि । यतु नञ्विशिष्टक्तान्तं तद्भक्तौ नुडिटौ, अतस्तद्ग्रहणेन गृह्येते, अतो नास्य भेदकौ तौ । अभेदकावित्यर्थः । तेन तदधिकमपि नञ्विशिष्टमेव भवतीति तेन समासो भवत्येव । **अशितानशितेनेति** । 'तस्मान्नुडचि' इति नुट् । **क्लिष्टाक्लिशितेनेति** । 'क्लिशः क्त्वानिष्ठयोः' इति पक्षे इट् । अनञिति शक्यमकर्तुम् । यदि स नञ् समस्येत तदा नञ्विशिष्टता नोपपद्यते; द्वयोरपि नञ्सम्बन्धात् । तस्माद् नञ्विशिष्टग्रहणादेवानञ् समस्यत इत्येषोऽर्थो लभ्यत इत्यनञ्ग्रहणमनर्थकम् । तत् क्रियते विस्पष्टार्थम् ।

**कृतापकृतादीनामित्यादि** । कृतापकृतप्रभृतीनामुपसंख्यानम् = प्रतिपादनं कर्तव्यम् । तत्रेदं प्रतिपादनम्—बहुलग्रहणमिहानुवर्तते, तेन कृतापकृतादीनामपि समासो भवतीति । **कृतापकृतमिति** । तदेकदेशस्येष्टस्य करणात् कृतम् । अपकृतञ्च तदेकदेशस्यानभिमतस्य करणात् । **भुक्तविभुक्तमिति** । भुक्तं त्वभ्यवहृतत्वाद्, विभुक्तञ्चाशोभनत्वात् । विशब्दोऽत्राशोभनत्वं प्रतिपादयति विरूपवत् । अथ वा—भुक्तञ्च तदेकदेशस्याभ्यवहृतत्वाद्, विभुक्तञ्च विशेषेणाभ्यवहृतत्वाद् भुक्तविभुक्तम् । एवं **पीतविपीतम्** । गतञ्च तत् प्रत्यागतञ्चेति **गतप्रत्यागतम्** । यातञ्च तत् पूर्वमनुयातञ्च पश्चाद् **यातानुयातम्** । **क्रयाक्रयिकेति** । महान् क्रयः क्रयशब्देनोच्यते, अल्पस्तु क्रयिका-

* समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च * । शाकप्रधानः पार्थिवः शाकपार्थिवः । कुतपसौश्रुतः । अजातौल्वलिः ॥

**सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ॥ ६१ ॥**

सत्, महत्, परम, उत्तम, उत्कृष्ट—इत्येते पूज्यमानैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति । 'पूज्यमानैः' इति वचनात् पूजावचनाः सदादयो विज्ञायन्ते । सत्पुरुषः । महापुरुषः । परमपुरुषः । उत्तमपुरुषः । उत्कृष्टपुरुषः ।

पूज्यमानैरिति किम् ? उत्कृष्टो गौः कर्दमात् ॥

**पदमञ्जरी**

*शाकपार्थवादीनामिति* । 'सिद्धये' इति शेषः । पृथोरपत्यं पार्थवः, केचित्पार्थिवेति पठन्ति, पृथिव्या ईश्वरः पार्थिवः, 'तस्येश्वरः' इत्यञ्, तस्याभ्यवहार्येषु शाकं प्रियत्वात्प्रधानम् । तत्र साहचर्यदेव तद्व्यपदेशत्वलाभादुत्तरपदलोपो न वक्तव्यः । समासस्तु वक्तव्यः, गौणत्वात्सामानाधिकरण्यस्य ॥

*सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ॥ पूज्यमानैरिति वचनादिति* । पूज्यमानस्य पूजापेक्षत्वादिति भावः । अत एव सदिति स्वरूपग्रहणं न शतृशानचोः, न हि तौ पूजामाहतुः । *उत्कृष्टो गौरिति* । उद्धृत इत्यर्थः । महाजनः, महोदधिरित्यादौ पूजाभावेऽपि विशेषणं विशेष्येणेति समासः । वचनं तु गुणक्रियाशब्दैरपि समासे सदादीनामेव पूर्वनिपातनियमार्थम् ॥

**न्यासः**

शब्देन । क्रयावयवसम्बन्धात् क्रयः, क्रयिकावयवसम्बन्धात् क्रयिका, क्रयश्चासौ क्रयिका चेति क्रयाक्रयिका । 'अन्येषामपि दृश्यते' इति दीर्घः । एवं पुटश्चासौ पुटिका चेति पुटापुटिका । फलञ्च तत् फलिका चेति फलाफलिका । मानश्च तदुन्मानिका चेति मानोन्मानिका । समानाधिकरणाधिकार इत्यादि । अत्राप्युपसंख्यानशब्दस्य प्रतिपादसमर्थः । प्रतिपादनन्तु पूर्ववदेव ॥

**सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ॥** पूज्यमानवचनैरिति वचनादित्यादि । पूज्यमानत्वं ह्येवमुत्तरपदस्य भवति यदि सदादयः पूजावचना भवन्ति, नान्यथा; तस्मात् पूज्यमानग्रहणात् सदादयः पूजावचना विज्ञायन्ते । अत एव सच्छब्देन शतृशानचोर्ग्रहणं न भवति, न हि तौ पूजामाहतुः । उत्कृष्टा गौः कर्दमादिति । उद्धृतेत्यर्थः । अथ कथं महाद्रुमः, महोदधिरिति समासः, न ह्यत्र पूजा गम्यते, किं तर्हि ? प्रमाणातिरेक उत्तरपदार्थस्य ? यद्यप्येवम्, तथापि बहुलग्रहणानुवृत्तेर्भविष्यति ॥

**वृन्दारकनागकुञ्जरैः पूज्यमानम् ॥ ६२ ॥**

वृन्दारक, नाग, कुञ्जर—इत्येतैः सह पूज्यमानवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति। 'पूज्यमानम्' इति वचनाद् वृन्दारकादयः पूजावचना गृह्यन्ते। गोवृन्दारकः, अश्ववृन्दारकः। गोनागः, अश्वनागः। गोकुञ्जरः, अश्वकुञ्जरः।

पूज्यमानमिति किम्? सुषीमो नागः ॥

**कतरकतमौ जातिपरिप्रश्ने ॥ ६३ ॥**

कतरकतमौ जातिपरिप्रश्ने वर्त्तमानौ समर्थेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति। कतरकठः। कतरकालापः। कतमकठः। कतमकालापः।

**पदमञ्जरी**

*वृन्दारकनागकुञ्जरैः पूज्यमानम्* ॥ वृन्दारकशब्दो देवजातिवचनः, इतरौ हस्तिजातिवचनौ, तत्रोपमानत्वे सति पूजावचनता सम्भवति। तत्र व्याघ्रादेराकृतिगणत्वात्सिद्धे समासे पूजायामेव यथा स्यान्निन्दायां मा भूदित्येवमर्थं वचनम्। इह मा भूत्—माणवकोऽयं नागो यस्मान्मूर्खं इति। सामान्यप्रयोगेऽपि यथा स्यादित्यन्ये। *सुषीम इति*। संज्ञेयं नागविशेषस्य। यद्येवम्, विशेषणं विशेष्येणेत्यधिकारादेवात्र न भविष्यति, न ह्यनागः सुषीमोऽस्ति? सत्यम्; प्रत्युदाहरणदिगियं दर्शिता, माणवकोऽयं नाग इति प्रत्युदाहरणम् ॥

*कतरकतमौ जातिपरिप्रश्ने* ॥ *कतरकठ इति*। 'गोत्रं च चरणैः सह' इति जातिः। *तथा च प्रत्युदाहरणमिति*। पूर्वं वृत्तिष्पूपन्यस्तमुपपन्नं भवतीति शेषः ॥

**न्यासः**

**वृन्दारकनागकुञ्जरैः पूज्यमानम्** ॥ वृन्दारकादयो जातिशब्दाः। ते चोपमानत्वे सति पूजावचना भवन्ति। तत्र व्याघ्रादेराकृतिगणत्वाद् 'उपमितं व्याघ्रादिभिः' इत्येवं सिद्धे सामान्यप्रयोगेऽपि यथा स्यादित्येवमर्थोऽयमारम्भः। 'पूज्यमानम्' इति वचनाद् वृन्दारकादयः पूजावचना गृह्यन्त इति। न ह्यन्यथा पूज्यमानत्वमुपपद्यत इति भावः।

**सुषीमो नाग इति**। ननु च विशेषणं विशेष्येणेति वर्त्तते। न च नागादन्यः सुषीमोऽस्ति, संज्ञा ह्येषा नागस्यैव? एवं तर्हि प्रत्युदाहरणदिगियं वृत्तिकृता दर्शिता। इदन्त्वत्र प्रत्युदाहरणम्—देवदत्तो नागो यस्मान् मूर्ख इति ॥

**कतरकतमौ जातिपरिप्रश्ने** ॥ जातिपरिप्रश्न एव व्युत्पाद्येते इति। 'किंयत्तदोर्निर्धारणे' इत्यनुवर्तमाने 'वा बहूनाम्' इत्यादिना। स्यादेतत्—कतरशब्दविशेषणार्थं

ननु कतमशब्दस्तावज्जातिपरिप्रश्न एव व्युत्पादितः, कतरशब्दोऽपि साहचर्यात्तदर्थवृत्तिरेव ग्रहीष्यते, किं जातिपरिप्रश्नग्रहणेन ? एवं तर्ह्येतज्ज्ञापयति—कतमशब्दोऽन्यत्रापि वर्त्तत इति । तथा च प्रत्युदाहरणम्—कतरो भवतोर्देवदत्तः । कतमो भवतां देवदत्तः ॥

**किं क्षेपे ॥ ६४ ॥**

'किम्' इत्येतत् क्षेपे गम्यमाने सुपा सह समस्यते, तत्पुरुषश्च समासो भवति । किंराजा, यो न रक्षति । किंसखा, योऽभिद्रुह्यति । किंगौः, यो न वहति । 'किमः क्षेपे' इति समासान्तो न भवति ।

क्षेप इति किम् ? को राजा पाटलिपुत्रे ॥

**पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणी-प्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ॥ ६५ ॥**

उभयव्यञ्जना 'पोटा' इत्यभिधीयते । [1]गृष्टिः = एकवारप्रसूता ।

**पदमञ्जरी**

*पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः* ॥ *उभयव्यञ्जनेति* । व्यज्यतेऽनेन स्त्रीत्वादिकमिति व्यञ्जनम् = स्तनादि, उभयोः स्त्रीपुंसयोर्व्यञ्जनं यस्याः सा तथोक्ता, नपुंसके पोटेत्यर्थः ।

पोटाशब्दस्तु तत्रापि स्त्रीत्वयुक्तः प्रवर्तते ।

**न्यासः**

जातिपरिप्रश्नग्रहणमित्याह—**कतरशब्दोऽपीत्यादि** । **तदेव ज्ञापयतीति** । यदि तर्हि कतमशब्दो जातिपरिप्रश्न एव वर्तमानो गृह्यते, जातिपरिप्रश्नग्रहणमनर्थकं स्यात्, विनापि तेन यथोक्तया नीत्या कतरकतमशब्दौ जातिपरिप्रश्न एव वर्तमानौ ग्रहीष्येते । **तथा चेत्यादि** । यत एव कतमशब्दस्य जातिपरिप्रश्नादन्यत्रापि वृत्तिः, एवञ्च कृत्वा भवता देवदत्तः कतम इति प्रत्युदाहरणमुपपद्यते । अन्यथा तन्नोपपद्येत; तस्य जातिपरिप्रश्नादन्यत्राप्रवृत्तेः ॥

**किं क्षेपे** ॥ **किंसखेति** । 'अनङ् सौ' इत्यनङादेशः । अथ किंराजेत्यादौ 'राजाहःसखिभ्यष्टच्' 'गोरतद्धितलुकि' इति टच् समासान्तः कस्मान्न भवतीत्याह—**किमः क्षेप इत्यादि** । अत्र 'न पूजनात्' इत्यतः 'न' इत्यनुवर्तते ॥

**पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः** ॥

---

१. युवतिर्नवयौवना स्त्री । स्तोकमल्पपर्यायः । कतिपयं च—इत्यधिकं पदमञ्जर्यादिसम्मतत्वादुपेक्षितम् ।

धेनुः = प्रत्यग्रप्रसूता । वशा, वन्ध्या । वेहद् = गर्भपातिनी । बष्कयणी = तरुणवत्सा । पोटादिभिः सह जातिवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति । इभपोटा । इभयुवतिः । अग्निस्तोकः । उदश्वित्कतिपयम् । गोगृष्टिः । गोधेनुः । गोवशा । गोवेहत् । गोबष्कयणी । कठप्रवक्ता । कठश्रोत्रियः । कठाध्यापकः । कठधूर्त्तः ।

जातिरिति किम् ? देवदत्तः प्रवक्ता । धूर्त्तग्रहणमकुत्सार्थम् ॥

**प्रशंसावचनैश्च ॥ ६६ ॥**

'जातिः इति वर्त्तते । जातिवाचि सुबन्तं प्रशंसावचनैः सह समस्यते, तत्पुरुषश्च समासो भवति । रूढिशब्दाः प्रशंसावचना

**पदमञ्जरी**

शब्दानां चित्रशक्तित्वात् षण्डशब्दो यथा पुमान् ॥

*धूर्त्तग्रहणमकुत्सार्थमिति* । कुत्सायां तु 'कुत्सितानि कुत्सनैः' इति सिद्धमिति भावः । *तत्र कठधूर्त्त इति* । यः कठः स धूर्त्तं इत्यर्थः, न तु कठत्वं कुत्स्यते ॥

*प्रशंसावचनैश्च* ॥ *रूढिशब्दाः प्रशंसावचना गृह्यन्त इति* । प्रशंसयेति वक्तव्ये वचनग्रहणादिह ग्रहणं रूढिशब्दानां प्रशंसामात्रवाचिनाम् । तेन ये यौगिकाः प्रशस्तशोभनरमणीयादयः, ये च विशेषवचनाः शुचिमृद्वादयः, ये च जातिशब्दाः सन्तः परत्र प्रयोगात्प्रशंसां गमयन्ति - सिंहो माणवक इति, ते सर्वे व्युदस्ता भवन्ति । *मतल्लिकादय इति* । 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' *इत्यमरः* । *आविष्टलिङ्गत्वादिति* । नियतलिङ्गत्वादित्यर्थः । *स्वलिङ्गोपादाना इति* । स्वस्यैव लिङ्गस्योपादानं येषु ते तथोक्ताः । 'प्रशंसावचनःपोटायुवति' इत्येकयोगे कर्त्तव्ये योगविभागश्चिन्त्यप्रयोजनः ॥

**न्यासः**

विशेषणमित्यादिना समासे प्राप्ते वचनमिदं परनिपातार्थम् । गुणशब्दा ह्येते । तत्र यदि तेन समासः स्यात् तदैषां पूर्वनिपातः प्रसज्येत । अथ धूर्तग्रहणं किमर्थम् यावता कुत्सनशब्दोऽयम्, 'कुत्सितानि कुत्सनैः' इत्येवं समासः सिद्धः ? इत्याह— धूर्त्तग्रहणमकुत्सार्थमिति । शब्दप्रवृत्तिनिमित्तकुत्सायां 'कुत्सितानि कुत्सनैः' इति समासो विहितः । अयं तु जातेः स्वयमकुत्सिताया धूर्तसम्बन्धे विवाक्षते समासो विज्ञायते, न कुत्सायाम् ॥

प्रशंसावचनैश्च ॥ रूढिशब्दाः प्रशंसावचना गृह्यन्त इति । त्रिप्रकारा हि प्रशंसाशब्दाः—केचिज्जातिशब्दाः परार्थे प्रयुज्यमानाः प्रशंसामाचक्षते, यथा–सिंहो देवदत्त

गृह्यन्ते मतल्लिकादयः, ते चाविष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादाना एव समानाधिकरणा भवन्ति। गोप्रकाण्डम्। अश्वप्रकाण्डम्। गोमतल्लिका। अश्वमतल्लिका। गोमचर्चिका। अश्वमचर्चिका।

जातिरिति किम्? कुमारी मतल्लिका॥

युवा खलतिपलितवलिनजरतीभिः॥ ६७॥

खलत्यादिभिः समानाधिकरणैः सह युवशब्दः समस्यते, तत्पुरुषश्च समासो भवति। 'जरतीभिः' इति स्त्रीलिङ्गनिर्देशः

**पदमञ्जरी**

*युवा खलतिपलितवलिनजरतीभिः*॥ संज्ञायूनो ग्रहणे गार्ग्यायणः खलतिरित्यादावेव तु स्यान्न च तस्य जरतीशब्देन सामानाधिकरण्यम्। न च गार्ग्यायणी युवतिरस्ति; स्त्रियां युवसंज्ञाप्रतिषेधात्, अतो युवेति स्वरूपग्रहणमित्याह—*युवशब्द इति*। *खलत्यादिभिः समानाधिकरणैरिति*। कथं पुनर्युवशब्दस्य जरतीशब्देन सामानाधिकरण्यम् पुंल्लिङ्गस्य स्त्रीलिङ्गेनेति, तत्राह—*स्त्रीलिङ्गनिर्देश इति*। अस्यां

**न्यासः**

इति; केचिद् गुणशब्दा गुणगुणिसम्बन्धेन प्रशंसावचना भवन्ति, यथा—रमणीयो ग्रामः, शोभनः पाचक इति; केचिद्रूढिशब्दा मतल्लिकादयः; तेषां प्रशंसैव शब्दार्थः। तदिह वचनग्रहणात् प्रशंसायामेव ये वर्त्तन्ते ते गृह्यन्ते रूढिशब्दाः। गोप्रकाण्डमिति। शोभनः प्रशस्तो गौरित्यर्थः। योगविभागोऽसन्देहार्थः। यदि पूर्वयोग एव प्रशंसावचना गृह्येरन्, तदा सन्देहः स्यात्—किं पोटादिभिः प्रत्येकं वचनमभिसम्बध्यते? अथ प्रशंसयेति? पोटादिभिः सम्बन्धे तत्पर्यायैरपि समासः स्यात्॥

युवा खलतिपलितवलिनजरतीभिः॥ खलत्यादिभिः समानाधिकरणैरित्यादि। यद्येवम्, किमर्थं जरतीभिरिति स्त्रीलिङ्गेन निर्देशः, जरद्भिरित्येवं नाम निर्देशः कर्त्तव्यः स्यात्, न हि जरतीशब्देन स्त्रीलिङ्गेन युवशब्दस्य पुंलिङ्गस्य सामानाधिकरण्यमुपपद्यत इत्याह—जरतीभिरिति स्त्रीलिङ्गेन निर्देश इत्यादि। कथं पुनरनेन निर्देशेनैषा परिभाषा शक्यते ज्ञापयितुम्? यद्येषा परिभाषा न स्यात् तदा जरतीभिरित्येवं निर्देशोऽनर्थकः स्यात्। तथा च समानाधिकरणाधिकारात् समानाधिकरणेन जरतीशब्देनायं समासो विज्ञायते। न च तेन स्त्रीलिङ्गेन पुंसि वर्त्तमानस्य युवशब्दस्य सामानाधिकरण्यं भवति, तदेष निर्देशः कथमर्थवान् भवति? यद्येषा परिभाषाऽवतिष्ठते! तस्यां हि सत्यां युवशब्दस्य ग्रहणे युवतिशब्दस्य ग्रहणं भवतीत्युपपद्यते। युवतिजरतीशब्दयोः सामानाधिकरण्यम्, तस्मिंश्च सति तयोः समासः। तदेवं

'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति ज्ञापनार्थः। युवा खलतिः युवखलतिः। युवतिः खलती युवखलती। युवा पलितः युवपलितः। युवतिः पलिता युवपलिता। युवा वलिनः युववलिनः। युवतिर्वलिना युववलिना। युवा जरन् युवजरन्। युवतिर्जरती युवजरती॥

कृत्यतुल्याख्या अजात्या ॥ ६८ ॥

कृत्यप्रत्ययान्तास्तुल्यपर्यायाश्च सुबन्ता अजातिवचनेन समस्यन्ते, तत्पुरुषश्च समासो भवति। भोज्योष्णम्। भोज्यलवणम्। पानीयशीतम्। तुल्याख्याः—तुल्यश्वेतः तुल्यमहान्। सदृशश्वेतः। सदृशमहान्।

पदमञ्जरी

हि परिभाषायां सत्यां युवशब्दस्य ग्रहणे युवतिशब्दस्यापि ग्रहणादुपपद्यते युवतिजरतीशब्दयोः सामानाधिकरण्यम्, असत्यां तु नोपपद्यत इत्यर्थापत्त्या परिभाषा ज्ञायते। *युवखलतीति*। 'कृदिकारादक्तिनः' 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीष्। वलिशब्दः पामादिः। *युवजरन्निति*। *जरद्भिरित्यपि* पाठः केनचिदाचार्येण बोधित इति पुंल्लिङ्गेनापि समासो भवतीति भावः। *युवतिर्जरतीति*। कथं विरुद्धवाचिनोः सामानाधिकरण्यम्, अन्योऽन्यधर्मोपलम्भात्तद्रूपत्वारोपाद्भविष्यति। यद्येवम्, विभिन्नलिङ्गयोरप्येवमेव सामानाधिकरण्यसम्भवात्कथं परिभाषा ज्ञाप्यत इति चिन्त्यम्; युवशब्दस्य पूर्वनिपातनियमार्थं वचनम्, अनियमो हि गुणशब्दत्वात्स्यात्॥

*कृत्यतुल्याख्या अजात्या* ॥ *तुल्यपर्यायाश्चेति*। आख्याग्रहणं स्वरूपनिराकरणार्थमिति भावः। भोज्योष्णादावनियमे प्राप्ते पूर्वनिपातनियमार्थं वचनम्। *तुल्यमहानिति*। 'सन्महत्' इत्यस्याकृत्यतुल्याख्येषु सावकाशत्वात्कृत्यतुल्याख्येषु परत्वादयमेव समासो युक्त इति भावः। *भोज्य ओदन इति*। प्रतिषेधसामर्थ्याद् विशेषणमित्यपि न भवति॥

न्यासः

जरतीभिरिति निर्देशो ज्ञापयति—एषा परिभाषास्तीति। नन्वेवमपि जरत्या समासः उच्यमाने जरता न प्राप्नोति—युवजरन्निति? नैष दोषः; वृत्त्यन्तरे हि जरद्भिरिति पठ्यते। उभयथाप्याचार्येण शिष्याः प्रतिपादिता इत्युभयं सिध्यति॥

कृत्यतुल्याख्या अजात्या ॥ तुल्यपर्यायाश्चेति। अथ स्वरूपग्रहणं कस्मान्न विज्ञायते? एवं मन्यते—कृत्य इत्यर्थग्रहणम्; अतस्तत्साहचर्यात् तुल्य इत्यर्थस्यैव ग्रहणं युक्तम्, तत्रार्थे कार्यासम्भवात् तद्वाचिनां समासो विज्ञायत इत्याख्याग्रहणं तुल्यनामधेयपरि-

अजात्येति किम् ? भोज्य ओदनः ॥

## वर्णो वर्णेन ॥ ६९ ॥

वर्णविशेषवाचि सुबन्तं वर्णविशेषवाचिना सुबन्तेन समानाधिकरणेन सह समस्यते, तत्पुरुषश्च समासो भवती । कृष्णसारङ्गः ।

### पदमञ्जरी

वर्णो वर्णेन ॥ 'विशेषणं विशेष्येण' इति वर्त्तते, तत्र द्वयोः स्वरूपग्रहणेन विशेषणता भवेत् । *वर्णश्चासौ वर्ण इति* । किं व्यावृत्तम् ? किमन्वितम् ? अथैकत्र विशेषाणां रूपस्यान्यत्र च ग्रहः ? शुक्लश्चासौ वर्ण इति न स्यात्, वर्णो विशेषणं शुक्लस्य वर्णत्वाव्यभिचारात्, तस्मादुभयत्र विशेषग्रहणमित्याह—*वर्णविशेषवाचीत्यादि* । *कृष्णसारङ्ग इत्यादि*। नानावर्णसमाहारः सारङ्गः, तथा शबलः, तस्य वर्णान्तरसमाहारेऽपि भावात्कार्ष्ण्यान्वियो नियतो न स्यादिति कृष्णो विशेषणम् । एवं लोहितशब्देऽपि द्रष्टव्यम् । ननु च कृष्णशब्दोऽत्रावयवे वर्त्तते, न समुदाये; तस्य सारङ्गत्वात्, तत्कथमवयववृत्तेः कृष्णशब्दस्य समुदायवृत्तिना सारङ्गशब्देन

### न्यासः

ग्रहार्थम्, अन्यथा गौर्वाहीक इत्यत्रापि स्यात्; गोशब्दस्येह सादृश्यार्थत्वात् । सर्वे एव हि शब्दा परपदार्थे प्रयुज्यमानाः सादृश्यं गमयन्ति । आख्याग्रहणे तु क्रियमाणे गोशब्दोऽत्र तुल्यनामधेयं न भवतीति समासाभावः। भोज्योष्णमित्यादावुष्णादयः शब्दा गुणवचनाः, तत्रासत्यस्मिन् योगे विशेषणसमासे सति तेषां पूर्वनिपातः स्यात् । अतः परनिपातार्थ आरम्भः । **तुल्यमहानिति** । यद्यप्यत्र 'सन्महत्' इत्यादिना समासः प्राप्नोति, तथापि परत्वादनेनैव भवति । तुल्याख्यायामस्यावकाशः—तुल्यश्वेत इति. तस्य चातुल्याख्यायामवकाशः—महापुरुष इति । **भोज्य ओदन इति**। ओदनशब्दोऽत्र जातिवचनः ॥

**वर्णो वर्णेन** ॥ 'विशेषणं विशेष्येण' इति वर्त्तते । तत्र यदि द्वयोरपि वर्णशब्दयोः स्वरूपग्रहणमिह स्याद्, विशेषणविशेष्यभावो नोपपद्येत; अभिन्नार्थत्वात् । न हि तदेव देवदत्तस्य विशेषणत्वं विशेष्यत्वं चोपपद्यते । अथाप्येकस्य स्वरूपग्रहणं स्यात् , अपरस्यार्थग्रहणम् ? एवमप्येकः सामान्यवाची स्याद् वर्णशब्दः, द्वितीयस्तु विशेषवाची कृष्णादिशब्दः; ततश्च प्रत्येकं विशेषणत्वं विशेष्यत्वञ्च न स्यात् । यत्र च तदुभयमस्ति तत्र समास इति प्रागुभयग्रहणस्य प्रयोजनमुक्तम् । तस्मादुभयत्राप्यर्थग्रहणं विज्ञायत इत्याह—**वर्णविशेषवाचीत्यादि** । **कृष्णसारङ्गः, लोहितसारङ्ग इति** । ननु च कृष्णशब्दो लोहितशब्दश्चावयवे वर्त्तते, सारङ्गशब्दस्तु समुदाये, यथा—शबलशब्दः, तत् कथमवयववृत्तेः कृष्णादिशब्दस्य समुदायवृत्तिना सारङ्गादि-

लोहितसारङ्गः । कृष्णशबलः । लोहितशबलः । अवयवद्वारेण कृष्णशब्दः समुदाये वर्त्तमानः समानाधिकरणो भवति ॥

पदमञ्जरी

सामानाधिकरण्यमत आह—*अवयवद्वारेणेत्यादि* । कृष्णावयवसम्बन्धात्समुदाय एव कृष्ण उच्यत इत्यर्थः । अत एवात्र गौणं सामानाधिकरण्यमिति सूत्रारम्भः । ननु 'तृतीया तत्कृतेन' इत्येवात्र सिद्धः समासः, कथम् ? सारङ्गशब्दो गुणवचनः सारङ्गत्वं कृष्णावयवकृतमित्यस्त्येव सिद्धिः; तत्रायमप्यर्थः—'वर्णो वर्णेष्वनेते' इति पूर्वपदप्रकृतिस्वरो न वक्तव्यो भवति, तत्पुरुषे तुल्यार्थतृतीयेत्येव सिद्धत्वात्, तदवश्यं वक्तव्यमेतत्प्रतिषेधार्थम् , इह मा भूत्—कृष्णैतो लोहितैत इति । इदं तु न वक्तव्यम् ? इदमपि वक्तव्यम्, इहापि यथा स्यात्—शुक्लबभ्रुः कृष्णशुक्ला हरितशुक्लः बभ्रुकपिलः, यस्य कश्चिदवयवः शुक्लः कश्चिद् बभ्रुः स समुदायोऽवयवशब्दाभ्यां तथोच्यत इति नात्र तत्कृतत्वसंभवः । अत्र कृष्णसारङ्ग इत्यादौ यत्रैकोऽवयवशब्दः, अपरः समुदायशब्दः, तत्रावयवस्याप्रधानत्वादुपसर्जनत्वात्पूर्वनिपातः । द्वयोस्त्ववयवशब्दयोः पर्याय इति द्रष्टव्यम् । इह यस्मिन् प्रयोगे वीरैः पुरुषैस्तद्वान् ग्रामः प्रतिपादयितुमिष्टस्तत्र प्रथममेवान्यपदार्थविवक्षा कार्या—वीराः पुरुषा अस्मिन्सन्तीति वीरपुरुषको ग्राम इति बहुव्रीहिरेव नित्यं यथा स्यात्; अन्यथा पूर्वमनपेक्षितेऽन्यपदार्थे वीराः पुरुषा वीरपुरुषा इति कर्मधारये कृते पश्चादन्यपदार्थविवक्षायां मत्वर्थीये सति वीरपुरुषवान् ग्राम इत्याद्यनिष्टमपि कदाचिदनुषज्येत । सर्वशब्दस्य त्वकारान्तैः कर्मधारयोऽपीष्यते । तस्माच्च मत्वर्थविवक्षायाम् 'अत इनिठनौ' इति ठनं बाधित्वा इनिरेव भवतीति वक्तव्यम्—सर्वं धनं सर्वधनं तदस्यास्तीति सर्वधनी, सर्वबीजी, सर्वकेशी । यत्र कर्मधारयो जातिविशेषवचनः, तत्र कर्मधारयान्मत्वर्थीयो भवति—कृष्णसर्पवान्वल्मीकः, लोहितशालिमान् ग्रामः, गौरखरवदरण्यम्, गौरमृगवदिति । न हि बहुव्रीहिणा तज्जात्या तद्वत्त्वं शक्यं प्रतिपादयितुम् ॥

न्यासः

शब्देन सामानाधिकरण्यमित्याह—अवयवद्वारेणेत्यादि । कृष्णशब्द उपलक्षणम् । लोहितशब्दोऽप्येवमेव समानाधिकरणो भवति । कृष्णावयवसम्बन्धात् समुदाय एव कृष्ण इत्युच्यते, लोहितावयवसम्बन्धाल्लोहित इति । अत एव गौणत्वादत्र सामानाधिकरण्यस्य 'विशेषणं विशेष्येण' इत्यादिना समासो न प्राप्नोतीतीदमारभ्यते । अथ सारङ्गशब्दस्यापि पक्षे पूर्वनिपातः कस्मान्न भवति ? अनुपसर्जनत्वात् । उक्तं ह्येतद्—उपसर्जनमिति महत्याः संज्ञायाः करणमन्वर्थसंज्ञा यथा विज्ञायेतेति । तेनाप्रधानमुपसर्जनमिति । न चात्र समुदायोऽप्रधानम्, किं तर्हि ? प्रधानमेव । अवयवानान्तु

कुमारः श्रमणादिभिः ॥ ७० ॥

कुमारशब्दः श्रमणादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। येऽत्र स्त्रीलिङ्गाः पठ्यन्ते—श्रमणा प्रव्रजिता कुलटेत्येवमादयस्तैः सह स्त्रीलिंगः एव कुमारशब्दः समस्यते। ये तु पुँल्लिङ्गा अध्यापकोऽभिरूपकः पण्डित इति, तैरुभयथा; प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति। कुमारी श्रमणा कुमारश्रमणा।

श्रमणा। प्रव्रजिता। कुलटा। गर्भिणी तापसी। दासी। बन्धकी। अध्यापक। अभिरूपक। पण्डित। पटु। मृदु। कुशल। चपल। निपुण ॥

चतुष्पादो गर्भिण्या ॥ ७१ ॥

चतुष्पाद्वाचिनः सुबन्ता गर्भिणीशब्देन समस्यन्ते, तत्पुरुषश्च समासो भवति। गोगर्भिणी। अजागर्भिणी ॥

पदमञ्जरी

*कुमारः श्रमणादिभिः* ॥ कुमारशब्दस्य पूर्वनिपातनियमार्थं वचनम् ॥

*चतुष्पादो गर्भिण्या* ॥ *चतुष्पाज्जातिरिति*। केचिदाहुः—पोटादिसूत्राज्जातिग्रहणमनुवर्त्यमिति। अन्ये त्वाहुः—ये शब्दान्तरनिरपेक्षाश्चतुष्पाज्जातिवचनाः, त एवान्तरङ्गत्वाद् गृह्यन्ते, न तु कालाक्ष्यादयो यौगिकाः शब्दान्तरसंनिधानाच्चतुष्पाद्विषया इति। गर्भिणीशब्दस्य परनिपातार्थं वचनम् ॥

न्यासः

तदर्थत्वादप्राधान्यम्। अतोऽवयववचनस्यैव कृष्णशब्दादेरुपसर्जनत्वम्, न समुदायवचनस्य सारङ्गादिशब्दस्य ॥

**कुमारः श्रमणादिभिः** ॥ **तैः सह स्त्रीलिङ्ग एव कुमारीशब्दः समस्यत इति**। न तु पुंल्लिङ्ग इत्यवधारणेन दर्शयति। न हि पुंल्लिङ्गस्य स्त्रीलिङ्गेन सामानाधिकरण्यमुपपद्यत इति भावः। **तैरुभयथेति**। स्त्रीलिङ्गैः, पुंल्लिङ्गैश्च। कथं पुनः पुंल्लिङ्गैः समास उच्यमानः स्त्रीलिङ्गैः स्यादित्यत आह—**प्रातिपदिकग्रहण इति**। गतार्थम् ॥

**चतुष्पादो गर्भिण्या** ॥ **चतुष्पाद इति**। चत्वारः पादा यासां ताश्चतुष्पादः। 'पादस्य लोपोऽहस्त्यादिभ्यः' इत्यन्तस्य लोपः। **चतुष्पाज्जातिरिति वक्तव्यमिति**। चतुष्पाज्जातिवचना[1] एव गर्भिण्या समस्यन्त इत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—पोटादिसूत्रादिह जातिग्रहणमनुवर्त्तते, तेन चतुष्पाज्जातिवाच्येव गर्भिण्या समस्यते, नान्यदिति ॥

---

१. 'चतुष्पादो जातिवचनाः' इति पाठः क्वचित् स चास्पष्टार्थत्वादुपेक्षितः।

* चतुष्पाज्जातिरिति वक्तव्यम् *। इह मा भूत्—कालाक्षी गर्भिणी। स्वस्तिमती गर्भिणी। चतुष्पाद इति किम्? ब्राह्मणी गर्भिणी ॥

मयूरव्यंसकादयश्च ॥ ७२ ॥

समुदाया एव निपात्यन्ते। मयूरव्यंसकादयः शब्दास्तत्पुरुषसंज्ञा भवन्ति। चकारोऽवधारणार्थः परममयूरव्यंसक इति समासान्तरं न भवति। मयूरव्यंसकः। छात्रव्यंसकः। काम्बोजमुण्डः। यवनमुण्डः। छन्दसि—हस्तेगृह्य। पादेगृह्य। लाङ्गलेगृह्य। पुनर्दाय ॥

एहीडादयोऽन्यपदार्थे। एहीडम्, एहियवं वर्त्तते। एहिवाणिजा क्रिया। अपेहिवाणिजा, प्रेहिवाणिजा। एहिस्वागता, अपेहिस्वागता, प्रेहिस्वागता। एहिद्वितीया, अपेहिद्वितीया। इहवितर्का। प्रोहकटा,

पदमञ्जरी

*मयूरव्यंसकादयश्च* ॥ *मयूरव्यंसक इति*। व्यंसकः = धूर्त्तः, मयूरश्चासौ व्यंसकश्चेति व्यंसकशब्दस्य गुणवचनत्वात्पूर्वनिपाते प्राप्ते वचनम्। एवं छात्रव्यंसकादीनां कम्बोजमुण्डपर्यन्तानाम्। अन्ये त्वाहुः—मयूरइव व्यंसकः, छात्रइव व्यंसकः कम्बोज इव मुण्डः, यवन इव मुंडः, उपमानसमासोऽयम्, 'उपमानानि सामान्यवचनैः' इत्येव सिद्धे पुनर्विधानं तत्पुरुषे तुल्यार्थतृतीयेति पूर्वपदप्रकृतिस्वरो मा भूदिति, स ह्युपमानसंशब्दनेन विहिते समासे विधीयत इति। *पुनर्दायेति*। 'पुनश्चनसौ छन्दसि' इति गतिसंज्ञा वार्त्तिककारीयेति ॥

गणकारेणेदं पठितम्, एहि इडेति यस्मिन्कर्मणि तद् एहीडम्, एवम्—एहियवम्। एहि वाणिजेति यस्यां क्रियायां सा एहिवाणिजा। एवम्—अपेहि वाणिजा, प्रेहिवाणिजा। एहि स्वागतमिति यस्यां क्रियायां सा एहिस्वागता। इहवितर्का, लोण्मध्यमेकवचनम्। प्रोह करटमिति यस्यां सा प्रोहकरटा;

न्यासः

मयूरव्यंसकादयश्च ॥ मयूरव्यंसक इति। मयूरश्चासौ व्यंसकश्चेति मयूरव्यंसकः। व्यंसकशब्दस्य पूर्वनिपाते प्राप्ते परनिपातार्थः पाठः। एवं चात्र मयूरव्यंसकादीनां यवनमुण्डपर्यान्तानाम्। छन्दसि हस्तेगृह्येत्यादि। 'समासेऽनञ्पूर्वे क्त्वो ल्यप्'। भाषायां तु—हस्तेगृहीत्वा, पुनर्दत्त्वेत्येवं भवति। एहीडादयोऽन्यपदार्थे इति। एहि ईड इति यत्र कर्मणि वर्त्तते तदुच्यते—एहीडमिति। एवम्—एहियवमिति। एहि वाणिजेति यस्यां क्रियायां सा एहिवाणिजा। एवम्—अपेहिवाणिजा, प्रेहिवाणिजा।

अपोहकटा । प्रोहकर्दमा, अपोहकर्दमा । उद्धरचूडा । आहरचेला । आहरवसना । आहरवनिता । कृन्तविचक्षणा । उद्धरोत्सृजा । उद्धमविधमा । उत्पचविपचा । उत्पतनिपता । उच्चावचम् । उच्चनीचम् । अचितोपचितम् । अवचितपराचितम् । निश्चप्रचम् । अकिञ्चनम् । स्नात्वाकालकः । पीत्वास्थिरकः । भुक्त्वासुहितः । प्रोष्यपापीयान् । उत्पत्यपाकला । निपत्यरोहिणी । निषण्णश्यामा । अपेहिप्रसवा । इहपञ्चमी । इहद्वितीया ।

पदमञ्जरी

एवं प्रोहकर्दमादय आहरवसनान्ताः । 'कृती छेदने' तदेव वचनम्, मुचादित्वा-न्नुम् । कृन्त विचक्षणेति यस्यां क्रियायां सा कृन्तविचक्षणा । उद्धर उत्सृजेति यस्यां सोद्धरोत्सृजा । 'आख्यातमाख्यातेन' इति सिद्धेऽसातत्यार्थं वचनम् । एवम् उद्धमविधमा, उत्पचविपचा, उत्पतनिपता । उदक्च अवाक्च उच्चावचम्, उच्चैश्च नीचैश्च उच्चनीचम्, आचितं चोपचितं च आचोपचम्, निश्चितं च प्रचितं च निश्चप्रचम्—सर्वं एते निपात्यन्ते । न किञ्चन विद्यते यस्य सोऽकिञ्चनः, स्नात्वा-कालकादिषु समासान्तोदात्तत्वं ल्यबभावश्च निपातनात् । प्रतीयमानक्रियापेक्षं च समानकर्तृकत्वम्—स्नात्वाकालकः संपन्न इति ।

न्यासः

एहि स्वागतमिति यस्यां क्रियायां सा एहिस्वागता । एवम्—अपेहिस्वागता । प्रोह कटमिति यस्यां सा प्रोहकटा । एवं प्रोहकर्दमादय आहरवसनान्ताः । कृन्धि विच-क्षणेति यस्यां क्रियायां सा कृन्धिविचक्षणा । उद्धरोत्सृजेति । तिङन्तयोः समासः । 'आख्यातमाख्यातेन क्रियासातत्ये' इत्येवं सिद्धेऽसातत्यार्थं वचनम् । उद्धरोत्सृजेति यस्यां क्रियायां सा उद्धरोत्सृजा । क्रियाप्रधानश्चायं समासः । उत्पतनिपता । उद्ध-मविधमा । एवमुद्धरोत्सृजेत्यादिकमसातत्यविषयमेव । उच्चावचमिति निपात्यते । उदक् चावाक् चेति विगृह्य । उच्चैश्च नीचैश्चेति विगृह्योच्चनीचमिति निपात्यते । आचितश्चोपचितश्चेति विगृह्य आचोपचम् । आचितश्च पराचितश्चेति आचपराचम् । निश्चितश्च प्रचितश्चेति निश्चप्रचम् । न किञ्चन् अकिञ्चनम् । स्नात्वाकालकः । पीत्वास्थिरकः । भुक्त्वासुहित इत्येतेषामन्तोदात्तार्थः पाठः । ल्यब्भावश्च निपात्यते । प्रोष्यपापीयानीति । ऐकपद्यमैकस्वर्यञ्च समासाद् भवति । एवम्—उत्पत्यपाकलादीनाम् । निपत्यरोहिणी । निषण्णश्यामा । अपेहिप्रसवा । इहपञ्चमी । इहद्वितीयेति । ऐक-पद्यमैकस्वर्यञ्च समासे भवति ।

जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारं चाभिदधाति । जहिजोडः । उज्जहिजोडः । जहिस्तम्बः । उज्जहिस्तम्बः ॥

आख्यातमाख्यातेन क्रियासातत्ये । अश्नीतपिबता । पचतभृज्जता । खादतमोदता । खादताचमता । आहरनिवपा । आवपनिष्किरा । उत्पचविपचा । भिन्धिलवणा । छिन्धिविचक्षणा । पचलवणा । पचप्रकूटा । अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः ।

इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ
द्वितीयाध्यायस्य प्रथमः पादः ॥

---

### पदमञ्जरी

*जहि कर्मणेति* । जहीति लोण्मध्यमैकवचनम्; तदेतत्कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्यमाने समासेन चेत्कर्ता विधीयते । जहि जोडमित्याभीक्ष्ण्येन य आह स जहिजोडः । अश्नीत पिबतेत्येवं यत्र सततमभिधीयते सा अश्नीतपिबता । एवं पचतभृज्जता, 'भ्रस्ज पाके' । भिन्धि लवणमिति यस्यामभिधीयते सा भिन्धिलवणा । एवं पचलवणा । *अविहितलक्षणस्तत्पुरुष इति* । यस्य तत्पुरुषस्य लक्षणं न कृतम्, प्राप्तप्रयोगश्च भवति, स मयूरव्यंसकादेराकृतिगणत्वादत्रैव द्रष्टव्य इत्यर्थः ॥

*इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां द्वितीयाध्यायस्य प्रथम पादः ॥*

### न्यासः

जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारञ्चाभिदधातीति । जहीति लोण्मध्यमपुरुषैकवचनम् । तदन्तं कर्मणा च बहुलं समस्यत आभीक्ष्ण्ये गम्यमाने समासेन चेत् कर्त्ता चाभिधीयते । जहिजोडमित्याभीक्ष्णं य आह स उच्यते जहिजोड इति । जहिस्तम्ब इति, लोट्; सिप्, 'हन्तेर्जः' इति जादेशः । जोडादेरत्र कर्मभावः ।

आख्यातमित्यादि । तिङन्तं तिङन्तेन सह समस्यते क्रियासातत्ये गम्यमाने । अश्नीत पिबतेत्यसकृद् यत्रोच्यते तत्र अश्नीतपिबतेति प्रयुज्यते । क्रियाप्रधानश्चायं समासः । एवं पचतभृज्जतेत्येवमादयो वेदितव्याः । भिन्धि लवणं भिन्धि लवणमिति यत्राभिधीयते सा भिन्धिलवणा । एवं पचलवणेति ।

इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्चिकायां द्वितीयाध्यायस्य प्रथमः पादः ॥

---

# अथ द्वितीयाध्याये द्वितीयः पादः

## पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥ १ ॥

एकदेशोऽस्यास्तीत्येकदेशी = अवयवी, तद्वाचिना सुबन्तेन सह पूर्व, अपर, अधर, उत्तरशब्दाः सामर्थ्यादेकदेशवचनाः समस्यन्ते, तत्पुरुषश्च समासो भवति। एकाधिकरणग्रहणमेकदेशिनो विशेषणम्। एकं चेद-

### पदमञ्जरी

*पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे* ॥ *एकदेशोऽस्यास्तीत्येकदेशीति*। एकगोपूर्वादिति ठञ् प्राप्नोति, अत एव निर्देशादनिर्द्रष्टव्यः। एकदण्डीत्ययं त्वपशब्दः एको दण्डो यस्येति बहुव्रीहिणैव गतत्वान्मत्वर्थ एव दुर्लभः, किं पुनरिनिष्ठञा बाधितः? एकदेशशब्दस्तु कर्मधारय एवावयववचन इति न तत्र बहुव्रीहिणा गतत्वम्, यथा—कृष्णसर्पवानिति। *सामर्थ्यादेकदेशवचना इति*। एकदेशमपेक्ष्यैकदेशी भवति, नान्यथेत्येतत्सामर्थ्यम्। *एकाधिकरणग्रहणमेकदेशिनो विशेषणमिति*। सत्सप्तम्यन्तवैयधिकरण्येनेति भावः, तदाह—*एकं चेदिति*। एकत्वसंख्याविशिष्टमित्यर्थः। समानाभिधेयवचन एकाधिकरणशब्दो न भवति, अवयवावयविशब्दयोः सामानाधिकरण्यानुपपत्तेः, सामानाधिकरण्येनेति प्रकृतत्वाच्च। स्यादेतत्—'समुदायेषु हि दृष्टाः शब्दाः अवयवेष्वपि वर्त्तन्ते' इति न्यायेन सामानाधिकरण्ये सति पूर्वश्चासौ कायश्चेति विशेषणमित्येव सिद्धः समासो नार्थ एतेन, एवं च कृत्वा परवल्लिङ्गमित्यत्र तत्पुरुषग्रहणं न कर्तव्यं भवति, कथम्? उत्तरपदार्थ-

### न्यासः

**पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे** ॥ **सामर्थ्यादेकदेशवचना इति**। यदि हि पूर्वादयः शब्दा एकदेशवचना न स्युस्तदोत्तरपदस्यैकदेशित्वं न गम्येत; एकदेशिन एकदेशापेक्षत्वात्। तस्मात् सामान्योक्ता अपि पूर्वादयः शब्दाः सामर्थ्यादेकदेशवचनाः समस्यन्त इति विज्ञायते। एकाधिकरणग्रहणमेकदेशिनो विशेषणमित्यस्यार्थं विस्पष्टीकर्तुमाह—**एक चेत्यादि**। एकमित्येकसंख्याविशिष्टं द्रव्यमित्यर्थः। **एकद्रव्यमित्यनेनाधिकरणशब्दोऽत्र द्रव्ये वर्तमान उपात्त इति दर्शयति**। ननु 'एकदेशिना' इति तृतीयान्तमेतत्, 'एकाधिकरणे' इत्येतत् सप्तम्यन्तम्, तत् कथं तयोर्भिन्नविभक्तिकयोः सामानाधिकरण्येन विशेषणविशेष्यभाव उपपद्यते, कथञ्च न स्यात्? भिन्नार्थत्वात्? नैतदस्ति; 'छन्दोवत् सूत्राणि भवन्ति' इत्यतो 'व्यत्ययो बहुलम्' इति बहुलवचनात्। 'एकाधिकरणे' इत्यत्र तृतीयार्थ एवैषा सप्तमी। न 'सप्तम्यधिकरणे च' इत्यनेन।

धिकरणमेकद्रव्यमेकदेशि भवति। षष्ठीसमासापवादोऽयं योगः। पूर्वं कायस्य पूर्वकायः। अपरकायः। अधरकायः। उत्तरकायः।

एकदेशिनेति किम्? पूर्वं नाभेः कायस्य। एकाधिकरण इति किम्? पूर्वं छात्राणामामन्त्रयस्व। कथं मध्याह्नः, सायाह्न इति? 'संख्याविसायपूर्वस्याह्नस्य' इति ज्ञापकात्सर्वेणैकदेशशब्देनाह्नः समासो भवति।

**पदमञ्जरी**

प्रधानत्वादेव सिद्धमिति, तत्राह—*षष्ठीसमासापवादोऽयं योग इति*। सिद्धं तु कथञ्चित्पूर्वकाय इति, कायपूर्व इत्यस्य निवृत्त्यर्थमेव तु सूत्रं कर्तव्यमित्यर्थः। *पूर्वं कायस्येति*। यद्यपि दिशि दृष्टः शब्दो दिक्शब्द इत्याश्रयणात्सम्प्रत्यदिग्वृत्तिनापि योगे पञ्चमी भवति, 'तस्य परमाम्रेडितम्' इति लिङ्गादवयववृत्तिभिर्योगे षष्ठी भवति।

*पूर्वं नाभेः कायस्येति*। नाभेरिति दिग्योगलक्षणा पञ्चमी, कायसम्बन्धी नाभ्यपेक्षया पूर्वो भाग इत्यर्थः। तत्र नाभिरेकदेशी न भवतीति न तेन समासो भवति। यस्त्वेकदेशी कायस्तेन समासो भवत्येव—पूर्वकायो नाभेरिति, पूर्वशब्दस्य सम्बन्धिशब्दत्वेन नित्यसापेक्षत्वादिति केचिदाहुः। अन्ये तु—यत्रार्थप्रकरणादिनावधिर्गम्यते तत्रैव समासः, न शब्दोपादाने इत्याहुः। *पूर्वं छात्राणामिति*। नेयं निर्द्धारणे षष्ठी, किं तर्हि? समुदायः छात्राणामित्यनेनोच्यत इति बहुवचनम्, यथा—छात्राणां पञ्चम इति, ततश्च छात्राणामेकदेशित्वमस्त्येव, किं तु बहुत्वसंख्याविशिष्टानामिति समासाभावः। *संख्याविसायपूर्वस्येत्यादि*। न ह्यन्यथा

**न्यासः**

अतो नास्ति भिन्नार्थत्वमित्यदोषः। **षष्ठीसमासापवादोऽयं योग इति**। 'एकदेशिना इति वचनात् पूर्वादयः शब्दा एकदेशवचना आश्रीयन्ते। सम्बन्धिशब्दा हि नियत मेव प्रतियोगिनमुपस्थापयन्ति। तत्रावयवावयविसम्बन्धे सत्येकदेशिनः षष्ठ्यामुपजनितायां 'षष्ठी' इति समासः प्राप्नोति, अतस्तदपवादोऽयं योग इति। **पूर्वकाय इत्यत्र** काय एकदेशी, एकद्रव्यञ्च; एकसंख्यायुक्तत्वात्।

**पूर्वं नाभेः कायस्येति**। नाभेरिति दिग्योगलक्षणा पञ्चमी। नाभेरुपरिष्टात् यत् पूर्वं तत् कायस्येत्येषोऽर्थो विवक्षितः। तेनात्र नाभिरेकदेशिनी न भवति। किं तर्हि? अवधिभूता, तद्वाची नाभिशब्दः पञ्चम्यन्तो न समस्यते। यस्त्वेकदेशी कायस्तद्वाचिनः कायशब्दस्य भवत्येव समासः। सत्यपि पूर्वशब्दस्य सापेक्षत्वे कायस्य प्राधान्यात् प्रधानस्य च सापेक्षस्यापि समासो भवतीति ज्ञापितमेतद् 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यत्र। **पूर्वं छात्राणमन्त्रयस्वेति**। अत्र बहुत्वसंख्याविशिष्टैकदेशि-

## अर्द्धं नपुंसकम् ॥ २ ॥

'एकदेशिनैकाधिकरणे' इति वर्त्तते । समप्रविभागेऽर्धशब्दो नपुंसकमाविष्टलिङ्गः, तस्येदं ग्रहणम् । 'अर्द्धम्' इत्येतद् नपुंसकमेकदेशि-

पदमञ्जरी

सायपूर्वत्वमह्नस्योपपद्यते इति भावः। केचित्तु—सर्वेणैकदेशवाचिना कालवाचिनः समासो भवति, न त्वहन्शब्दस्यैवेति ज्ञापकशरीरं वर्णयन्ति, तेन मध्यरात्र इत्यपि सिद्धं भवति ॥

*अर्द्धं नपुंसकम्* ॥ *आविष्टलिङ्ग इति* । नियतलिङ्ग इत्यर्थः । *तस्येदं ग्रहणमिति* । तत्रैवार्थे नपुंसकत्वस्याव्यभिचाराद् । अवयववाची ह्यभिधेयवशेन त्रिलिङ्गः—अपूपार्द्धं मया भक्षितम्, दन्तार्द्धमास्यात्पतितम्, ग्रामार्द्धः, नगरार्धः, सर्पिषार्द्धया व्यनक्तीति । 'तस्यार्द्धाः शस्त्वार्द्धाः परिशिष्य मध्ये निविदं दधाति'

न्यासः

नश्छात्रा इति न भवति समासः । ननु चात्र परत्वात् 'न निर्द्धारणे' इति षष्ठीसमासनिषेधो भविष्यति, तत् किमेवाधिकरणग्रहणेन ? नैतदस्ति; यदि तर्ह्यामन्त्रयस्वेत्येतन्नापेक्ष्यते तदा पूर्वं छात्राणामित्येतावद्वाक्यं परिसमाप्यते, तदा निर्द्धारणाभावाद् नायं तस्य प्रतिषेधस्य विषय इत्यसत्येकाधिकरणेऽनेकसंख्येनाप्येकदेशिना समासः स्यात् । अथ सर्वं हि वाक्यं क्रियया परिसमाप्यत इति पूर्वं छात्राणामित्यत्र यां काञ्चित् क्रियामध्याहृत्य निर्धारणं परिकल्प्येत, एवं 'पूर्वं कायस्य' इत्यत्रापि निर्द्धारणं स्यात् । अस्ति ह्यत्राप्यपकर्षणक्रिया निर्द्धारणहेतुः । तथा च तस्यैव योगस्य विषये क्रियारभ्यमाणोऽयं योगस्तदपवादः स्यात् । न चोत्सर्गापवादयोर्विप्रतिषेध उपपद्यते, तत् कथं परत्वात् 'न निर्द्धारणे' इति प्रतिषेधः प्रवर्तते—संख्याविसायपूर्वस्येत्यादि ? यदयम् 'संख्याविसायपूर्वस्याह्नस्य' इत्याह, ततो ज्ञापकादवसीयते—सर्वेणैकदेशिनाऽह्नः समासो भवतीति; अन्यथा हि सायपूर्वत्वमह्नशब्दस्य नोपपद्यत इत्ययुक्तमेतद् वचनं स्यात् ॥

अर्द्धं नपुंसकम् ॥ समप्रविभागे त्वर्द्धशब्दो नपुंसकमाविष्टलिङ्गस्तस्येदं ग्रहणमिति । यद्येवम्, समग्रहणमेव कर्तव्यम् ? नैवं शक्यम्, अनेकार्थत्वात् समशब्दस्य । तथा हि—स निम्नोन्नतादिरहितेऽपि देशे वर्तते, यथा—समे यजेतेति, निम्नोन्नतादिरहिते देशे यजेतेत्यर्थः । अथापि समप्रविभाग इत्युच्यते, एवमपि गुरुत्वं स्यात्, तस्मान् नपुंसकग्रहणं कर्तव्यम् ? न कर्तव्यम्; अर्द्धमिति नपुंसकलिङ्गेन निर्देशादेव हि नपुंसकस्य ग्रहणं भविष्यति, नैतदस्ति; असति हि नपुंसकग्रहणे शब्दरूपापेक्षया नपुंसकनिर्देश इति विज्ञायेत, यथा—'स्वमज्ञातिधनाख्यायाम्', 'बन्धुनि बहुव्रीहौ' इति च; ततश्चार्द्धशब्दस्य नपुंसकलिङ्गताऽनाश्रिता स्यात् । एवमनपुंसकलिङ्गोऽपि

नैकाधिकरणेन समस्यते, तत्पुरुषश्च समासो भवति। षष्ठीसमासापवादोऽयं योगः। अर्द्धं पिप्पल्याः अर्द्धपिप्पली। अर्द्धकोशातकी।

नपुंसकमिति किम्? ग्रामार्द्धः। नगरार्द्धः। एकदेशिनेत्येव— अर्द्धं पशोर्देवदत्तस्य। देवदत्तेन सह समासो न भवति। 'एकाधिकरणे' इत्येव— अर्द्धं पिप्पलीनाम्॥

पदमञ्जरी

इति। भाष्ये त्ववयववाची पुंल्लिङ्ग इत्युपलक्षणम्। क्वचित्तु समप्रविभागे स्त्रीलिङ्गता दृश्यते— एकान्तृचेऽर्द्धा युग्मासु' इति, युग्मासु ऋक्षु अर्द्धाः शस्त्वा निविदं दध्यादित्यर्थः, तस्यार्षत्वेन निर्वाहः। अर्धमिति नपुंसकनिर्देशः शब्दरूपापेक्षयापि सम्भाव्येत, यथा 'स्वमज्ञातिधनाख्यायाम्' 'बन्धुनि बहुव्रीहौ' इति, तस्मान्नपुंसकमित्युक्तम्। *अर्द्धपिप्पलीति*। पिप्पलीशब्दस्य 'एकविभक्ति च' इत्युपसर्जनसंज्ञा न भवति; एकविभक्तावषष्ठ्यन्तमिति वचनात्। *अर्द्धं पिप्पलीनामिति*। न तर्हीदानीमिदं भवति— अर्द्धानि पिप्पलीनामर्द्धपिप्पल्य इति; नैतदस्मिन्विग्रहे भवति, खण्डसमुदाये भवति— अर्द्धपिप्पली चार्द्धपिप्पली चार्द्धपिप्पल्य इति। *देवदत्तशब्देन समासो न भवतीति*। देवदत्तोऽत्र स्वामी, न त्वेकदेशी। यस्त्वेकदेशी पशुस्तेन भवत्येव समासः— अर्द्धपशुर्देवदत्तस्येति, देवदत्तस्वामिकं पशोरर्द्धमित्यर्थः। तत्र समुदायेन सम्बन्धान्नास्ति सापेक्षत्वम्।

अयं योगः शक्योऽवक्तुम्। कथमर्द्धपिप्पली? सामानाधिकरण्ये भविष्यति— अर्द्धं चासौ पिप्पली चेति। ननु च यदर्द्धं न पिप्पली, अथ पिप्पली नार्द्धम्, अर्द्धं पिप्पली चेति विप्रतिषिद्धम्? नास्ति विप्रतिषेधः; समुदाये हि दृष्टाः शब्दा अवयवेष्वपि वर्तन्ते। किञ्च समप्रविभागादन्यत्रार्द्धचन्द्रादावयमेव गतिप्रकारः,

न्यासः

समस्येत। तस्मादर्द्धशब्दस्य नपुंसकलिङ्गत्वमाश्रयितुं नपुंसकमिति वक्तव्यम्। अर्द्धपिप्पलीति। 'परवल्लिङ्गम्' इति स्त्रीलिङ्गता। अथात्र 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वं कस्मान्न भवति? अनुपसर्जनत्वात्। उपसर्जनत्वं तु 'एकविभक्ति च' इति। अत्र 'विभाषा छन्दसि' इत्यतो विभाषाग्रहणमनुवर्तते। सा च व्यवस्थितविभाषा प्रतिपादिता। ग्रामार्द्ध इति। ग्रामस्यैकदेश इत्यर्थः।

अर्द्धं पशोर्देवदत्तस्येति। देवदत्तशब्देन सह समासो न भवति; अनेकदेशित्वाद् देवदत्तस्य। न ह्यसावेकदेशः, किन्तर्हि? स्वामी। यस्त्वेकदेशी पशुशब्दः, तेन सह भवत्येव समासः। सत्यपि पशुशब्दस्य सापेक्षत्वे पशोः प्राधान्यात् समासो भवत्येव— अर्द्धपशुर्देवदत्तस्येति॥

## द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ॥ ३ ॥

'एकदेशिनैकाधिकरणे' इति वर्तते। षष्ठीसमासापवादोऽयं योगः। अन्यतरस्यांग्रहणात् सोऽपि षष्ठीसमासो भवति। 'पूरणगुण' इति प्रतिषेधश्चात एवान्यतरस्यांग्रहणसामर्थ्यान्न प्रवर्त्तते। द्वितीयादीनि शब्दरूपाणि एकदेशिनैकाधिकरणेन सहान्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति। द्वितीयं भिक्षायाः द्वितीयभिक्षा। षष्ठीसमासपक्षे—भिक्षाद्वितीयं वा। तृतीयं भिक्षायाः तृतीयभिक्षा। भिक्षातृतीयं वा। चतुर्थं भिक्षायाः चतुर्थभिक्षा। भिक्षाचतुर्थं वा। तुर्यं भिक्षायाः तुर्यभिक्षा। भिक्षातुर्यं वा।

### पदमञ्जरी

समप्रविभागेऽपि तथास्तु। इदं तर्हि प्रयोजनम्—समप्रविभागे षष्ठीसमासो मा भूदिति? इष्यते षष्ठीसमासोऽपि, तथा च *भगवान्पिङ्गलनागः* प्रयुङ्क्ते—'स्वरार्द्धं चार्यार्द्धम्' इति। एवं तर्हि गौणत्वात्सामानाधिकरण्यस्य विशेषणसमासो न किल स्यादित्ययमारम्भः॥

*द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्* ॥ *अन्यतरस्यांग्रहणात्सोऽपि भवतीति*। ननु च पूरणप्रत्ययान्ता एवैते द्वितीयादयः, तत्र पूरणगुणसुहितेत्यादिना प्रतिषेधेन भवितव्यम्, यदापि 'पूरणाद्भागे तीयादन्' इति स्वार्थिकोऽन्प्रत्ययः क्रियते, तदापि 'पूरणगुणसुहितार्थ' इत्यर्थशब्दस्य प्रत्येकमभिसम्बन्धात्पूरणार्थग्रहणम्, न तु तदधिकारविहितप्रत्ययग्रहणमिति भवितव्यमेव प्रतिषेधेन, तत्कथं सोऽपि भवतीत्याह—*पूरणगुणेत्यादि*। वाक्यस्य महाविभाषयैव सिद्धत्वात्षष्ठीसमासप्राप्त्यर्थमेवान्यतरस्यांग्रहणमिति भावः। पूर्वं तु षष्ठीसमासापवादो योग इत्याद्य-

### न्यासः

**द्वितीयतृतीयचतुर्थतुर्याण्यन्तरस्याम्** ॥ **अन्यतरस्यांग्रहणात् सोऽपि षष्ठीसमासो भवतीति**। ननु च पूरणप्रत्यान्ता एते द्वितीयादयः शब्दाः। तत्र पूरणेत्यादिना समासनिषेधेन भवितव्यम्, तत् कथं सोऽपि भवतीत्याह—**पूरणेत्यादि**। यद्यत्र षष्ठीसमासस्य प्रतिषेधः स्यात् तदान्यतरस्यांग्रहणमनर्थकं स्यात्। वाक्यस्य तु महाविभाषयैव सिद्धत्वादिति भावः। **द्वितीयं भिक्षाया इति**। भिक्षाया द्वितीयो भाग इत्यर्थः। **द्वितीयं भिक्षाया भिक्षुकस्येति**। भिक्षुकेण सहात्र समासो न भवति। न ह्यसावेकदेशी, किं तर्हि? स्वामी। **तुर्यशब्दः** 'चतुरश्छयतावाद्यक्षरलोपश्च' इति यत्प्रत्ययान्तः पूरणार्थस्य प्रतिपादकः॥

* तुरीयशब्दस्यापीष्यते * । तुरीयं भिक्षायाः तुरीयभिक्षा । भिक्षातुरीयं वा[1] ।

एकदेशिनेत्येव--द्वितीयं भिक्षाया भिक्षुकस्य । एकाधिकरण इत्येव—द्वितीयं भिक्षाणाम् ।

## प्राप्तापन्ने च द्वितीयया ॥ ४ ॥

'एकदेशिनैकाधिकरणे' इति निवृत्तम् । द्वितीयासमासे प्राप्ते वचनमिदम् । समासविधानात्सोऽपि भवति । प्राप्त, आपन्न—इत्येतौ द्वितीयान्तेन सह समस्येते, तत्पुरुषश्च समासो भवति । प्राप्तो जीविकाम् प्राप्तजीविकः, जीविकाप्राप्त इति वा । आपन्नो जीविकाम् आपन्नजीविकः, जीविकापन्न इति वा ।

### पदमञ्जरी

प्राप्त्यभिप्रायेणोक्तम् । यद्वा—सत्यस्मिन्योगे षष्ठीसमासप्रतिषेधस्यास्य च षष्ठीसमासबोधकत्वमविशिष्टमिति मत्वा तथोक्तम् ।

अयमपि योगः शक्योऽवक्तुम्, कथम् ? समुदायावयवयोरौपचारिके सामानाधिकरण्ये सति द्वितीयभिक्षादि सिद्धम्, मुख्यार्थवृत्तौ षष्ठीसमासे तु भिक्षाद्वितीयमित्यादि भविष्यतीति । नैतत्सुष्ठूच्यते, अनेनैव खल्वन्यतरस्यांग्रहणेन षष्ठीसमासः प्राप्यते, कथमस्मिन्योगेऽसति भविष्यति ! ॥

*प्राप्तापन्ने च द्वितीयया* ॥ *प्राप्तजीविक इति* । 'एकविभक्ति' इत्युपसर्जनत्वाद् ह्रस्वत्वम् । प्राप्ता जीविका येनेति कर्मणि क्तान्तेन बहुव्रीहावप्येतत्सिद्धम्, समासान्तोदात्तत्वार्थं तु वचनम् । इह प्राप्तसुखः, प्राप्तदुःख इत्यादिषु 'जातिकालसुखादिभ्यः' इति प्राप्तापन्नयोः परनिपातप्रसङ्गश्च । इह लिङ्गविशिष्टपरिभाषया प्राप्ताशब्दस्याप्ययं समासो भवति—प्राप्ता जीविकां प्राप्तजीविका इति पुंवद्भावो वक्तव्यः । *भाष्ये* त्वकारः पूर्वपदस्य विधीयत इत्युक्तम् । चकारेण समुच्चयार्थेनाकारप्रश्लेषोऽनुमीयते, सौत्रत्वाच्च निर्देशस्य प्रकृतिभावाभावः, प्राप्तापन्ने द्वितीयान्तेन सह समस्येते, अ च अत्वं च भवति प्राप्तापन्नयोरित्यर्थः ॥

### न्यासः

**प्राप्तापन्ने च द्वितीयया ॥ द्वितीयासमासे प्राप्त इति** । 'द्वितीयाश्रित' इत्यादिना । **समासविधानात् सोऽपि भवतीति** । आपेशब्दादयमपि भवति । **प्राप्तजीविक इति** । 'एकविभक्ति च' इत्यादिनोपसर्जनत्वम् । ह्रस्वत्वन्तु 'गोस्त्रियोरुपसर्जनस्य' इति । अत्र च 'परवल्लिङ्गम्' इत्यादिना जीविकाया यल्लिङ्गं तत् समुदायस्य कस्मान्न भवति ?

१. अयमंशो न्यासाद्यसम्मतः ।

## कालाः परिमाणिना ॥ ९ ॥

परिमाणमस्यास्तीति परिमाणी, तद्वाचिना सुबन्तेन सह सामर्थ्यात्परिमाणवचनाः कालशब्दाः समस्यन्ते, तत्पुरुषश्च समासो भवति। षष्ठीसमासविषये योगारम्भः। मासो जातस्य मासजातः। संवत्सर-

### पदमञ्जरी

*कालाः परिमाणिना* ॥ *सामर्थ्यात्परिमाणवचना इति*। परिमाणमपेक्ष्य परिमाणो भवति, नान्यथेत्येतत्सामर्थ्यम्। तत्र च यद्यपि कालः प्रस्थादिवत्सर्वतो मानं न भवति, तथापि परिच्छेदहेतुत्वात्परिमाणमित्युच्यते। *मासो जातस्येति*। कस्य पुनरयं मासः परिच्छेदकः; न तावज्जातस्य, तस्य हि दिष्टयादि परिमाणं न तु मासः; नापि जननक्रिया, तस्या एकक्षणभावित्वान्मासेन सम्बन्धाभावात्? उच्यते—जननक्रियावधिर्मासे न परिच्छिद्यते। मासो जातस्येति, कोऽर्थः? जननक्रियाया ऊर्ध्वमस्य मासो जातः, अतीते मासेऽस्य जननमिति यावत्। अनेन

### न्यासः

'द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः' इति वचनात्, तेन प्राप्तापन्नयोर्यल्लिङ्गं तत् समुदायस्य भवति। अथ यदा प्राप्ता जीविकामिति विगृह्य समासः क्रियते तदा किमुदाहरणम्? प्राप्तजीविक इति। टापः श्रवणं कस्मान्न भवति? 'स्त्रियाः पुंवत्' इति योगविभागात् पुंवद्भावेन टापो निवर्त्तितत्वात्[1] ॥

कालाः परिमाणिना ॥ सामर्थ्यात् परिमाणवचना इति। एवं ह्युत्तरपदस्य परिमाणिवाचित्वं गम्यते यदि कालशब्दाः परिमाणवचना भवन्ति, नान्यथा। तस्मात् काला इत्यविशेषाभिधानेऽपि सामर्थ्यात् 'परिमाणवचनाः कालशब्दाः समस्यन्ते' इति विज्ञायते। ननु च कालः परिमाणमेव न भवति, अनवधित्वात्, तत् कथं तदभिधायिनः शब्दाः परिमाणवचना भवन्ति? नैष दोषः; यद्यपि मुख्यस्य परिमाणस्य वाचका न भवन्ति, गौणस्य तु भवन्त्येव। इह हि मुख्यं परिमाणत्वं कालस्य मासादेर्न भवतीति सामर्थ्यात् परिच्छेदहेतुमात्रपरिमाणसाधर्म्यमुपादायोपचारेण कालाः परिमाणत्वेनाभिमताः। मासादयोऽपि हि जातादेः सम्बन्धिनीरादित्यगतीर्गमयन्ति, अतो भवन्ति परिच्छेदहेतवः। षष्ठीसमासविषये योगारम्भ इति। परिमाणपरिमाणिसम्बन्धे

---

१. एतत्तु भाष्यानुक्तम्। तत्र चकारेण अकारप्रश्लेषोऽनुमितः। तथा हि 'नायमनुकर्षणार्थश्चकारः, किं तर्हि? अत्वमनेन विधीयते ....' (२.२.४. भाष्यम्)। द्वितीयया अ इति भट्टोजिमते च्छेदः। कैयटमतानुसारी नागोजिस्तु 'प्राप्तापन्ने इत्युत्तरमकारप्रश्लेषः' इत्याह। 'सौत्रत्वाच्च निर्देशस्य प्रकृतिभावः प्रगृह्याश्रयो न भवति' इति कैयट इति प्रथमसंस्करणसम्पादकाः।

जातः। द्व्यहजातः। त्र्यहजातः॥

पदमञ्जरी

प्रकारेण मासो जातस्य परिमाणम्, यथा—मासे देयमृणमिति ऋणदानस्यावधिर्मासेन परिच्छिद्यते। *मासजात इति।* यथा गावोऽस्य सन्तीति गोमानिति वाक्ये षष्ठीनिर्दिष्टस्यापि तद्वतो वृत्तौ प्राधान्यम्, तत्कस्य हेतोः? अभिहितः षष्ठ्यर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इति, यथा—चित्रा गावोऽस्य चित्रगुः पुरुष इति बहुव्रीहाविति, तद्वदत्रापि वाक्ये षष्ठीनिर्दिष्टस्यापि तद्वतो जातस्य वृत्तौ प्राधान्यं द्रष्टव्यम्। तथा च मासजातो दृश्यतामिति क्रियायोगो जातस्यैव भवति, न पुनरर्द्धपिप्पल्यादिवत्पूर्वपदार्थस्य। *द्व्यहजात इति।* द्वयोरह्नोः समाहारः 'राजाहःसखिभ्यष्टच्' 'न संख्यादेः समाहारे' इत्यह्नादेशस्य प्रतिषेधः। कथं तर्हि द्व्यहजात इति, द्वे अहनी अस्य जातस्येति त्रयाणां पदानां युगपदनेन समासे कृते जातशब्द उत्तरपदे परतः पूर्वयोर्द्विगुर्भविष्यति? ननु च 'सुप्सुपा' इत्येकत्वसंख्यया विवक्षितत्वाद् द्वयोर्द्वयोः समासः, न बहूनां युगपत्? उच्यते—वक्तव्यमेवैतद् उत्तरपदेन परिमाणिना द्वयोः समासवचनमिति; परिमाणिवचनेनोत्तरपदेन द्विगोः सिद्धये समासो वक्तव्यः। अथ द्वयोर्युगपदिति गम्यते, तस्माद्वचनाद्बहूनामप्ययं समासो भवति। एवं द्वौ मासौ जातस्य द्विमासजातः, त्रिपदे तत्पुरुषे जातशब्द उत्तरपदे परतः पूर्वयोस्तत्पुरुषे सति कालान्ते द्विगावपि पूर्वपदप्रकृतिस्वरो भवति। द्वयोर्मासयोः समाहारो द्विमासम् पात्रादि, द्विमासं जातस्येति विगृह्य समासे क्रियमाणे सति शिष्टत्वात्समासान्तोदात्तत्वं स्यात्। इह मासो जातस्य, मासा जातस्येति द्विवचनबहुवचनान्तानामयं समासो भवति। वृत्तौ विभक्तौ निवृत्तायां द्वित्वबहुत्वावगतौ प्रमाणाभावाद् अभेदैकत्वसंख्याप्यत्र न भवति, शुद्धमेव त्वेकत्वं गम्यते। यत्र द्वयोर्बहुषु वानुस्यूत एकः शब्दार्थस्तत्रैवाभेदैकत्वसंख्या, मासशब्दस्त्वक्तपरिमाणमर्थमाचष्ट इति द्वित्वबहुत्वावगतौ विभक्तिमपेक्षते, स्वतस्त्वेकत्वस्यैवासाधारणः॥

न्यासः

हि परिमाणिवाचिनः षष्ठ्या भवितव्यम्। यत्र च षष्ठी भवति स षष्ठीसमासस्य विषयः, तेनायं षष्ठीसमासस्य विषयो योग आरभ्यते। मासजात इत्यत्र जातः परिमाणी। तस्य परिमाणं मासः। द्व्यहजात इति द्वयोरह्नोः समाहार इति द्व्यहः। 'राजाहःसखिभ्यष्टच्' 'अह्नष्टखोरेव' इति टिलोपः। 'न संख्यादेःसमाहारे'इत्यह्नादेशप्रतिषेधः। द्व्यहो जातस्य द्व्यहजातः। अथ 'कालाः' इति बहुवचननिर्देशः किमर्थः? स्वरूपविधिनिरासार्थ इति चेत्; नैतदस्ति; न हि स्वरूपग्रहणे सत्युत्तरपदस्य परिमाणिवाचित्वं गम्यते, कालशब्दस्यापरिमाणवाचित्वात्। स्तमात् परिमाणिग्रहणादेव कालविशेषवाचिनां

## नञ् ॥ ६ ॥

नञ् समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। न ब्राह्मणः अब्राह्मणः । अवृषलः ।

* नञो नलोपस्तिङि क्षेपे * । अपचसि त्वं जाल्म[1]॥

### पदमञ्जरी

नञ् ॥ विभक्तिञकारयोर्विशेषाभावाद् ञकारोच्चारणम् । सुपानशब्दस्य विशेषणात्पामादिलक्षणस्य नस्यासुबन्तत्वादेवाग्रहणं सिद्धम् । इहाब्राह्मणादिशब्दैः क्षत्रियाद्यभिधानमिष्यते, तत्र जातिमात्रपरे ब्राह्मणशब्दे न विद्यते ब्राह्मण्यं यस्य सोऽब्राह्मणः क्षत्रियादिरित्यन्यपदार्थप्रधानः समासो भवति । तत्र नाप्राप्ते बहुव्रीहावारम्भादनेन तस्य बाधनादब्राह्मणको देश इत्यपि न सिद्ध्यति; न हि प्रवृत्तिनिमित्तमात्रनिष्ठेषु ब्राह्मणादिशब्देष्वयं समासः, न तद्वन्निष्ठेष्विति नियामकमस्ति । इह चावर्षा हेमन्त इति हेमन्तस्य यद्वचने तत्समासस्य प्राप्नोति, लिङ्गे तु परवल्लिङ्गमिति वचनाद्दोषाभावः। इह च असोऽसर्वस्मै इत्युत्तरपदार्थस्योपसर्जनत्वात्त्यदादिकार्यं सर्वादिकार्यं च न स्यात् । यदा त्वसत्सामान्यवर्तमानो नञ् ब्राह्मणादिभिर्विशेष्यते, ब्राह्मणत्वेनासत्क्रियान्तरेण तु सन् क्षत्रियादिकोऽब्राह्मण

### न्यासः

मासादीनां ग्रहणं भविष्यति । एवं तर्हि बहुवचननिर्देशोऽयं मात्राधिक्येन सूत्रप्रबन्धस्यार्थाधिक्यसूचनार्थः । तथा चोक्तम्—'इङ्गितेनोन्मिषितेन महता सूत्रप्रबन्धेनाचार्याणामभिप्राया लक्ष्यन्ते' इति । तेन संख्यापूर्वपदस्त्रिपदोऽप्ययं परिमाणिना तत्पुरुषसमासो भवतीत्येषोऽर्थो लभ्यते । तेन द्व्यहजात इत्येवमादि सिद्धं भवति । द्वे अहनी जातमस्येति विगृह्य त्रिपदे तत्पुरुषे कृते जातशब्द उत्तरपदे परतः पूर्वयोः पदयोः 'तद्धितार्थोत्तरपदसमाहारे च' इति द्व्यवयवस्तत्पुरुषो भवति, पूर्ववट् टच्, 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः ॥

नञ् ॥ नञो ञकारः 'नलोपो नञः' इति विशेषणार्थः, पामनपुत्रादिषु मा भूत् । 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' । अथाब्राह्मण इति किंप्रधानोऽयं समासः ? उत्तरपदार्थप्रधानस्तत्पुरुषः, यथा—राजपुरुष इति । पूर्वपदार्थप्रधानोऽव्ययीभावः, यथा—अमक्षिकमिति । अन्यपदार्थप्रधानो बहुव्रीहिः, यथा—अब्राह्मणको देश इति । यद्येवम्, अब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति ? अथ निवृत्तिपदार्थकोऽयं ब्राह्मणशब्दः, सा च निवृत्तिः स्वाभाविकी नञा द्योत्यत इति मतम्, एवं च सत्यभाव एवास्यार्थ इत्यब्राह्मणमानयेत्युक्ते न कस्यचिदानयनं प्राप्नोति ? नैष दोषः, सर्वं हि पदं स्वार्थे प्रयुज्यमानं प्रयोगप्रतिज्ञानमपेक्षते । तथा चोक्तम्—

१-१. अयमंशः प्रायेण मूलेऽनुपलब्धः ।

पदमञ्जरी

इति, तदा पूर्वपदार्थप्रधानम्; तत्र नञर्थस्य प्राधान्यात्संख्यायोगः समासस्य न स्यात्, वाचनिकी तु परवल्लिङ्गता भवतु। स्यादेतत्—शब्दशक्तिस्वाभाव्यादसत्त्वरूपमर्थं वाक्ये न नञाचष्टे, समासे तु सत्त्वरूपम्, तेन सिद्धः संख्यायोगः? एवमप्यपवादेनानेनाव्ययीभावस्य बाधादमक्षिकमिति न सिद्धयति, तस्य तु निर्मक्षिकमित्यादिरवकाशः, असोऽसर्वस्मै इति च पूर्ववत्स्मायाद्यसिद्धिः। अस्तु तर्ह्यत्रोत्तरपदार्थप्रधानः? यद्येवम्, ब्राह्मणमात्रस्यानयनं प्राप्नोति? यद्युत्तरपदार्थप्रधानता तत्र हेतुः, इहापि तर्हि राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति? अस्त्यत्र विशेषः, राजा विशेषकः प्रयुज्यते। इहापि तर्हि नञ् विशेषकः प्रयुज्यते? कथं नञ् नाम स्यात्, अनियतगुणस्य गुणविशेषप्रतिपादनाय हि विशेषणं प्रवर्त्तते, न तदुपघाताय। नञा च ब्राह्मणार्थः सर्वात्मना प्रतिषिध्यमानः प्रतिषिध्यत इति कथमसतः प्राधान्यं स्यात्! तस्मादुत्तरपदार्थप्राधान्यमिच्छताऽस्मिन्विषये नञनर्थकः, अन्वाख्यनसामर्थ्यात्तु साधुत्वमेवंभूतस्यार्थवदनर्थकावयवस्य समासस्येति वाच्यम्, ततश्च ब्राह्मणमात्रस्यानयनं प्राप्नोति? नैष दोषः; निवृत्तपदार्थकोऽत्र ब्राह्मणशब्दः, सा च निवृत्तिः स्वाभाविकी नञा द्योत्यते, कोऽर्थः? केवलो ब्राह्मणशब्दः प्रयुज्यमानः प्रसिद्धिवशान्मुख्यमेव ब्राह्मणमाचष्टे; नञ्प्रयोगेण तु क्षत्रियादौ सादृश्यादिना निमित्तेनाध्यारोपितं ब्राह्मण्यं न तात्त्विकमिति द्योत्यते। तदेवं मुख्यो ब्राह्मणशब्दस्यार्थो निवृत्तः जातश्चामुख्यः क्षत्रियादिरिति न ब्राह्मणमात्रानयनम्, नापि न कस्यचिदानयनमिति सिद्धम्। उक्तं च—

'प्राक् समासात्पदार्थानां निवृत्तिर्द्योत्यते नञा।
स्वभावतो निवृत्तानां रूपभेदादलक्षिता'॥ इति।

स्यादेतत्—अर्थप्रत्यायनाय शब्दः प्रयुज्यते। ब्राह्मणार्थश्चेन्निवृत्तः, किं मुधा ब्राह्मणपदं प्रयुज्यते? तन्न; असति ब्राह्मणपदे नेत्येतावत्युच्यमाने कस्यार्थोऽत्र निवर्त्तयितुमिष्ट इति न ज्ञायते। ब्राह्मणपदे तु सति तदर्थस्य क्षत्रियादौ मुख्यः सत्ताविरहः प्रतीयते।

अन्यद्दर्शनम्—सर्वं एते शब्दा गुणसमुदाये वर्त्तन्ते, स्मर्यन्ते च—

'तपः श्रुतं च योनिश्चेत्येतद्ब्राह्मण्यकारणम्।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः'॥ इति।

तथा च श्रुतिः—

'षड् व्याधयो यं पुरुषं तपन्ति जैह्वो हार्दं औदरो रैतसश्च।
तप्तश्च घर्मः शिशिरश्च शीतः ब्राह्मणस्तं स्मरार्थं गरुत्मन्'॥ इति।

पदमञ्जरी

गौरः शुच्याचारः पिङ्गलकेश इत्यादयश्च धर्माः, तदेषां समुदाये ब्राह्मणशब्दः, एवं क्षत्रियादिशब्देष्वपि द्रष्टव्यम् । एवं स्थिते समुदायेषु वृत्ताः शब्दा अवयवेष्वपि वर्त्तन्त इति न्यायाज्जातिभिन्ने गुणभिन्ने वा यदा ब्राह्मणशब्दो वर्त्तते तदा स्वाभाविकी जातिगुणनिवृत्तिर्नञा द्योत्यते, अविष्टांशसद्भावप्रतिपादनाय ब्राह्मणशब्दप्रयोगः । यद्येवम्, द्वयोरपि भिन्नविषयत्वप्रसङ्गः, कथम् ? यस्यांशस्य सद्भावं ब्राह्मणशब्द आह, न तस्याभावं नञाह; यस्याभावं नञाह, न तस्य सद्भावं ब्राह्मणशब्द आह ? नैष दोषः; द्वावप्येतौ समुदायावलम्बिनौ कृतवत्, तद्यथैकदेशकरणाकरणाभ्यामेकमेव वस्तु कृतं चाकृतं च भवति, तथेहाप्येकदेशविभागात् समुदाय एव निवृत्त उच्यते, एकदेशसद्भावाच्च स एव सन्नभिधीयत इति सर्वमनवद्यम् ।

इहानेको जन आगत इति द्व्यादिष्वेकत्वमारोपितं प्रतीयते, मुख्यं तु प्रतिषिध्यते, क्षत्रियादाविव ब्राह्मण्यमित्येकवचनमेव भवति द्व्यादिसंख्या प्रतीयते । तदेवमुत्तरपदार्थप्रधान इति स्थितम् । अत्र च लिङ्गम्—'एतत्तदोः सुलोपोऽकोरनञ्' इत्यत्रानञ्समासग्रहणम् । अन्यथैतत्तदोरर्थद्वारेण सम्बन्धिनः सोर्लोपो विधीयमानो नैषो ददात्यसो ददातीत्यत्र कथं प्राप्नुयात् । इह न ब्राह्मणस्य भाव इति भावेन नञा च युगपत्सम्बन्धे विवक्षिते त्वतलौ च प्राप्नुतः, समासश्च; तत्र यदि परत्वात्त्वतलौ कृत्वा पश्चात्पुनःप्रसङ्गविज्ञानान्नञ्समासः क्रियते, ततः 'तत्पुरुषे तुल्यार्थ' इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तं पदं स्यात्, प्रत्ययस्वरो नञ्स्वरश्चेष्यत इति समासे कृते त्वतलौ कार्यौ । आह च—त्वतलभ्यां नञ्समासः पूर्वविप्रतिषिद्धं त्वतलोः स्वरसिद्ध्यर्थमिति । तत्र भावप्रत्ययस्तावत्प्रकृत्यर्थस्य सापेक्षत्वेनासामर्थ्यान्न भवति, नञ्समासस्तु प्रधानस्य सापेक्षत्वाद्भवति ॥

न्यासः

"आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया" । इति ।

तच्च द्विविधं ज्ञानम्—सम्यक्, मिथ्या चेति । उभयमप्येतद् ब्राह्मणशब्दः प्रवर्त्तयति । तत्र सम्यग् ज्ञानपूर्वके ब्राह्मणशब्दप्रयोगे नास्ति नञो व्यापारः, न हि तत्र नञा किञ्चित् क्रियते । मिथ्याज्ञानपूर्वके तु विद्यत एव तस्य व्यापारः । तत्र हि तेन मिथ्याज्ञानप्रभवता परस्याख्यायते । मिथ्याज्ञानं च दुष्टेन्द्रियहेतुकम् । तच्च सादृश्यादृते न सम्भवतीति प्रतिषेधे सत्युत्तरपदार्थसदृशः समासार्थो जायते । तथा चोक्तम्—'नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' इति । तस्मादब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशे क्षत्रियादौ प्रतीतिर्भवतीति न भवति पूर्वोक्तदोषावसरप्रसङ्गः ॥

## ईषदकृता ॥ ७ ॥

'ईषत्' इत्ययं शब्दोऽकृदन्तेन सुपा सह समस्यते, तत्पुरुषश्च समासो भवति ।

* ईषद् गुणवचनेनेति वक्तव्यम् *। ईषत्कडारः । ईषत्पिङ्गलः । ईषद्विकटः । ईषदुन्नतः । ईषत्पीतम् । ईषद्रक्तम् ।

गुणवचनेनेति किम् ? इह न भवति—ईषद् गार्ग्यः ॥

## षष्ठी ॥ ८ ॥

षष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । राज्ञः पुरुषो राजपुरुषः । ब्राह्मणकम्बलः ।

* कृद्योगा च षष्ठी समस्यत इति वक्तव्यम् *। इध्मप्रव्रश्चनः ।

### पदमञ्जरी

ईषदकृता ॥ *ईषद् गुणवचनेनेति वक्तव्यमिति* । अकृतेत्यपनीय सूत्रे गुणवचन-ग्रहणं कर्तव्यमित्यर्थः । अकृतेति चोच्यमान ईषद्गार्ग्य इत्यादावतिव्याप्तिः, ईषदुन्नत इत्यादावव्याप्तिः स्यादिति भावः । *ईषद्गार्ग्य इति* । ननु च गार्ग्यो भवति वा न वा न पुनरीषद्गार्ग्यः कश्चित् ? उच्यते; गार्ग्यत्वेन सह य एकार्थसमवेताः क्रिया-गुणास्तदपेक्षया जातेः प्रकर्षादियोगः—गार्ग्यतरः, गार्ग्यकल्पः, ईषद्गार्ग्यः, गार्ग्य-पाश इति; यथा—गोतरः, गोकल्पः, गोपाश इति ॥

षष्ठी ॥ *कृद्योगा चेत्यादि* । 'कर्तृकर्मणोः कृति' इति कृच्छब्दोपादानेन या विहिता सा कृद्योगा । *इध्मप्रव्रश्चन इति* । 'ओव्रश्चू च्छेदने', करणे ल्युट् ।

### न्यासः

ईषदकृता ॥ ईषद् गुणवचनेति वक्तव्यमिति । ईषदित्येतदव्ययं गुणवचनेन समस्यते, न सर्वेणाकृदन्तेनेत्येतद्रूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—विभाषे-त्येनुवर्तते, सा च व्यवस्थितविभाषा विज्ञायते । तेन गुणवचनेनैव समासो भविष्यति, नान्येन । ईषद्गार्ग्य इति गार्ग्यशब्दोऽयं जातिवचनः, न गुणवचनः । नन्वकृतेत्युच्यते; तत्र ईषत्पीतः, ईषदुन्नत इत्यादि न सिध्यति; पीतादिशब्दस्य कृदन्तत्वात् ? नैष दोषः, अव्युत्पन्ना ह्येते पीतादिशब्दा वेदितव्याः, न तु कृदन्ताः ।

षष्ठी ॥ कृद्योगा चेत्यादि । 'कृद्योगलक्षणा षष्ठी समस्यते' इति व्याख्येयम् । तत्रेदं व्याख्यानम्—यदयम् 'क्तेन च पूजायाम्' 'अधिकरणवाचिना च' 'कर्मणि च' 'तृजकाभ्यां कर्तरि च' इति निषेधमारभते, तज्ज्ञापयति—'कृद्योगा या षष्ठी सा समस्यते' इति—अन्यथा प्रतिषेधारम्भोऽनर्थकः स्यात्; प्राप्त्यभावात् । इध्मप्रव्रश्चन

पलाशशातनः। किमर्थमिदमुच्यते? 'प्रतिपदविधाना च षष्ठी न समस्यते' इति वक्ष्यति, तस्यायं पुरस्तादपकर्षः ॥

याजकादिभिश्च ॥ ९ ॥

पूर्वेण समासः सिद्ध एव, तस्य 'कर्तरि च' इति प्रतिषेधे प्राप्ते वचनमिदमारभ्यते प्रतिप्रसवार्थम्। याजकादिभिः सह षष्ठी समस्यते, तत्पुरुषश्च समासो भवति। ब्राह्मणयाजकः। क्षत्रिययाजकः।

याजक। पूजक। परिचारक। परिषेचक। स्नातक। अध्यापक। उत्सादक। उद्वर्त्तक। होतृ। पोतृ। भर्तृ। रथगणक। पत्तिगणक।

पदमञ्जरी

*पलाशशातन इति*। पलाशानि शात्यन्ते = पात्यन्ते येन दण्डादिना स पलाशशातनः। *किमर्थमिदमुच्यत इति*। सूत्रेण सिद्धिं मन्वानस्य प्रश्नः। *प्रतिपदविधाना चेत्यादि*। यदा तस्य वक्तव्यस्यारम्भः तदेदमपि वक्तव्यम्। तस्य त्वनारभ्यतां तत्रैव वक्ष्यामः। *अपकर्ष इति*। अपवाद इत्यर्थः ॥

*याजकादिभिश्च* ॥ *प्रतिप्रसवार्थमिति*। अन्येन निर्वर्त्तितस्य पुनः प्रवृत्त्यभ्यनुज्ञानम् = प्रतिप्रसवः। *तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यमिति* क्वचिद्वृत्तौ पठ्यते, तस्यार्थः—तच्छब्देन सन्निधानाद् गुणा एव परामृश्यन्ते, तस्मिंस्त्वात्मनि ये गुणाः स्थितास्तैः षष्ठी समस्यते। न च स्वात्मन्यवस्थानं कस्यचित्सम्भवति, भेदनिबन्धनो ह्याधाराधेयभावः; विशेषतो गुणानां द्रव्याश्रितत्वात्। तस्मादभिधानव्यापारापेक्षया तत्स्थत्वमुच्यते। गन्धादयो हि गुणाः स्वशब्दैर्द्रव्यात्पृथक्कृता एव च प्रत्याय्यन्ते—चन्दनस्य गन्ध इति, न तु कदाचिद् द्रव्येणैकत्व-

न्यासः

**इति**। करणे ल्युट्। 'कृत्यल्युटो बहुलम्' इति 'कर्त्तरि वा', 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी। **पलाशशातन इति**। शदेर्ण्यन्तस्य 'शदेरगतौ तः' इति दकारस्य तकारः। पूर्ववल्ल्युट्, षष्ठी च। किमर्थमित्युच्यते, यावता षष्ठीत्यनेनैव कृद्योगलक्षणाया अपि षष्ठ्याः समासः सिद्ध एवेत्यत आह—प्रतिपदविधाना चेत्यादि। सुबोधम् ॥

**याजकादिभिश्च** ॥ चकारोऽनुक्तसमुच्चयार्थः। तेन 'तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यम्' न वक्तव्यं भवति; अनेनैव सिद्धत्वात्। तस्मिन् स्थिताः = तत्स्थाः। प्रकृतस्यान्यस्याभावात् तदित्यनेन गुणा एव प्रत्यवमृश्यन्ते। तेन गुणात्मन्येव ये गुणा वर्त्तन्ते, न कदाचिद् द्रव्यात्मनि, तैः षष्ठी समस्यते। यद्यपि नास्त्येव हि स गुणो यो द्रव्ये न वर्त्तते, सर्वस्य गुणस्य द्रव्याश्रितत्वात्; तथापि गुणशब्दास्तु केचित् मतुब्लोपादभेदोपचाराद्वा तद्वति द्रव्ये वर्त्तमाना गुणमाधारानुगतं गमयन्ति, यथा—

*तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यम्*। चन्दनगन्धः। कपित्थरसः।

* गुणात्तरेण तरलोपश्चेति वक्तव्यम् *। सर्वेषां श्वेततरः सर्वश्वेतः, सर्वेषां महत्तरः सर्वमहान्; 'न निर्धारणे' इति प्रतिषेधे प्राप्ते वचनमिदम्। सर्वशुक्ला गौः॥

न निर्धारणे॥ १०॥

**पदमञ्जरी**

मापन्नाः, न हि भवति चन्दनं गन्ध इति। शुक्लादयस्तु कदाचिद् द्रव्यात्पृथग्भूताः प्रत्याय्यन्ते–पटस्य शुक्ल इति, कदाचिद् द्रव्यस्योपरञ्जकास्तेनैकत्वमापन्नाः—शुक्लः पट इति। तत्र ये गुणा द्रव्यात्पृथग्भूता एव स्वशब्देन प्रत्याय्यन्ते तत्परिग्रहाय 'तत्स्थैः' इत्युक्तम्। बलाकायाः शौक्ल्यमित्यत्र तु यद्यपि शौक्ल्यशब्देन द्रव्यात्पृथग्भूतस्यैवाभिधानम्, तथापि तदेव शौक्ल्यं शुक्लः पट इत्यत्र द्रव्येणैकतामापन्नं प्रत्याय्यते। अर्थस्य तत्स्थत्वमाश्रीयते, इति शब्दभेदेऽप्यर्थः स एवेति नास्ति शौक्ल्यस्य तत्स्थत्वमिति समासाभावः। रूपवान्पट इत्यत्र भेदाश्रयेणैव मत्वर्थीयेनाभेदोऽध्यवसीयते इति तत्स्थमेव रूपमिति पटरूपमिति भवत्येव समासः। अयमपि 'गुणेन न' इति प्रतिषेधस्य पुरस्तादपकर्षः। *चन्दनगन्ध इति*। 'गन्धं विक्रीणीते' इति चन्दनगन्धादौ गन्धशब्दो जातिनिमित्तकः, न गुणशब्दः; मालतीकुसुमादिष्वदर्शनादिति तत्स्थ एव गन्धः। *भाष्ये* तु 'न तु तद्विशेषणैः' इति पठितम्, तेषां गुणानां यानि विशेषणानि तैः सह समासो न भवति—घृतस्य तीव्रो गन्धः, चन्दनस्य मृदुः स्पर्श इति तीव्रमृदुशब्दाभ्यां समासो न भवति। तदिदमन्यथासिद्धमिति *वृत्तिकारेण* उपेक्षितम्, कथम्? घृतस्य गन्धेन सम्बन्धः, न तद्विशेषणेन तीव्रेण। यद्यपि प्रकरणादिवशात्तीव्रशब्द एव विशेषे गन्धे वर्तते, तदुपजनित एव व्यतिरेके घृतस्येति षष्ठी, तथापि तीव्रं घृतमिति दर्शनात्तत्स्थत्वाभावादेव समासाप्रसङ्गः॥

**न्यासः**

शुक्लः पटः, लोहितः कम्बल इति। अपरे त्वाश्रयाद् विभक्तं द्रव्यं प्रत्यनुपसर्जनीभूतं गुणमाहुः, यथा–चन्दनस्य गन्धः, कपित्थस्य रस इति। तस्मादभिधानशक्तिव्यापारापेक्षया तत्स्थैरिति विशेषणं युक्तम्। तदेतदुक्तं भवति—ये गुणाः स्वशब्दैर्द्रव्यं प्रत्यनुपसर्जनभावापन्ना एव प्रत्याय्यन्ते, तैः सह षष्ठी समस्यत इति चन्दनस्य गन्धश्चन्दनगन्धः, कपित्थस्य रसः कपित्थरसः। गन्धादयो हि स्वशब्दैराधारविभक्ता एव प्रत्याय्यन्ते, न तु कदाचिदाश्रयानुगता द्रव्यं प्रति विशेषणीभूताः।

पूर्वेण समासे प्राप्ते प्रतिषेध आरभ्यते। निर्धारणे या षष्ठी सा न समस्यते। जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम्। क्षत्रियो मनुष्याणां शूरतमः। कृष्णा गवां सम्पन्नक्षीरतमा। धावन्नध्वगानां शीघ्रतमः॥

*प्रतिपदविधाना च षष्ठी न समस्यत इति वक्तव्यम्*। सर्पिषो ज्ञानम्। मधुनो ज्ञानम्॥

पदमञ्जरी

न निर्द्धारणे॥ *जातिगुणक्रियाभिरिति*। उपलक्षणमेतत्; कतरो भवतोर्देवदत्त इति संज्ञायामपि[1] निर्द्धारणदर्शनात्। *क्षत्रियो मनुष्याणां शूरतम इति*। अत्र क्षत्रियशब्देन समासप्रसङ्गः; तदपेक्षया हि मनुष्याणामिति षष्ठी, न शूरतमापेक्षया, गुणशब्दत्वाच्च न तेन समासप्रसङ्गः। *कृष्णा गवामिति*। नात्रायमर्थः—गवां मध्ये या कृष्णा सा सम्पन्नक्षीरतमेति, एवं हि कृष्णाशब्दस्य गवामित्यनेन सम्बन्धः। न च तस्य समासप्रसङ्गः; गुणेन नेति प्रतिषेधात्। तस्माद्गवां मध्ये या सम्पन्नक्षीरतमा सा कृष्णेत्ययमत्रार्थः। *धावन्नध्वगानामिति*। अत्र धावच्छब्देन समासाप्रसङ्गः; सत्संज्ञकत्वात्। शीघ्रतमशब्दस्तु गुणशब्दो न वेति चिन्त्यम्। *प्रतिपदविधाना चेति*। शेषलक्षणां मुक्त्वा सर्वान्या प्रतिपदविधाना षष्ठी। कथं गृहस्वामी, विद्यादायादः, पृथिवीश्वर इति, यावता 'स्वामीश्वर' इत्यादिना प्रति-

न्यासः

न निर्धारणे॥ मनुष्याणां क्षत्रियः शूरतम इति। 'यतश्च निर्धारणम्' इति षष्ठी। प्रतिपदविधाना चेत्यादि। 'षष्ठी शेषे' इति सामान्यलक्षणविहितां षष्ठीं त्यक्त्वा याऽन्या विशेषलक्षणविहिता षष्ठी सा प्रतिपदविधाना, सा च षष्ठी न समस्यत इत्येतद्रूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—नेति योगविभागः क्रियते, तेन प्रतिपदविधाना षष्ठी न समस्यत इति। यद्येवम्, कथं गृहस्वामी, विद्यादायादः, पृथ्वीश्वर इति, प्रतिपदविधाना ह्येषा षष्ठी, 'स्वामीश्वराधिपतिदायाद' इत्यादिना विशेषलक्षणेन तस्या विधानात्? नैष दोषः, शेषलक्षणैव ह्यत्र षष्ठी। न हि स्वाम्यादिसूत्रेण षष्ठी विधीयते, किं तर्हि? सप्तमी। सा तु सप्तमी षष्ठीं बाधिष्यत इति चकारेण पुनः षष्ठीप्रतिप्रसवः क्रियते। न ह्येवंविधा षष्ठी प्रतिपदविधाना भवति। अत एव 'न निर्धारणे' इति निषेधो विधीयते। 'यतश्च निर्धारणम्' इत्यत्रापि चकारेण सैव शेषलक्षणा षष्ठी प्रतिप्रसूयते, अन्यथा हीयमपि प्रतिपदविधानैव षष्ठीति समासो न स्यात्। ततश्च 'न निर्द्धारणे' इति प्रतिषेधोऽनर्थकः स्यात्। सर्पिषो ज्ञानमिति। 'ज्ञोऽविदर्थस्य' इति करणे षष्ठी॥

१. एतच्च 'कियत्तदो निर्धारणे' इति सूत्रे स्पष्टम्।

## पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ॥ ११ ॥

पूरण, गुण, सुहितार्थ, सद्, अव्यय, तव्य, समानाधिकरण- इत्येतैः सह षष्ठी न समस्यते। अर्थशब्दः प्रत्येकमभिसंबध्यते, तेन स्वरूपविधिर्न भवति। पूरणार्थे—छात्राणां पञ्चमः। छात्राणां दशमः। गुण—बलाकायाः शौक्ल्यम्। काकस्य कार्ष्ण्यम्। सुहि-

### पदमञ्जरी

पदमत्र षष्ठी ? नानेन षष्ठी विधीयते, किं तर्हि ? सप्तमी। सा तु षष्ठीं मा बाधिष्टेति चकारेण शेषलक्षणैवाभ्यनुज्ञायते। अत एव 'न निर्द्धारणे' इति सूत्रारम्भः। 'यतश्च निर्द्धारणम्' इत्यत्रापि हि चकारेण शेषलक्षणैव षष्ठी प्रतिप्रसूयते; अन्यथा सापि प्रतिपदविधानैव स्यादिति किं 'न निर्द्धारणे' इत्यनेन। *सर्पिषो ज्ञानमिति*। 'ज्ञोऽविदर्थस्य करणे' इति षष्ठी। अत्राहुः—'ज्ञोऽविदर्थस्य करणे' इति षष्ठी-प्रकरणे 'शेषे' इति वर्त्तते, तत्र न माषाणामश्नीयादितिवत् 'षष्ठी शेषे' इत्यनेनैव सिद्धा षष्ठी, प्रकरणं तु नियमार्थम्। षष्ठी भवत्येव श्रूयत एव, न तस्याः समासो भवतीत्यर्थः। समासे 'सुपो धातुप्रातिपदिकयोः' इति सुब्लुक् स्यात्। तस्मात्प्रतिपदविधाना चेति न वक्तव्यम्, एवं च कृत्वा 'कृद्योगा च' इत्यपि न वक्तव्यम्; 'कर्तृकर्मणोः कृति' इत्यत्र हि 'शेषे' इति निवृत्तमिति वक्ष्यते, तेन कर्तृकर्मविवक्षायामप्राप्तैव षष्ठी तेन विधीयत इति कुतः समासनिवृत्तिरिति॥

*पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन॥ प्रत्येकमिति*। पूरणादिभिरित्यर्थः। *स्वरूपविधिरिति*। पूरणादीनामर्थपर्यन्तानां चतुर्णामित्यर्थः। अत एव गुणशब्देन नादेङां ग्रहणम्, किं तर्हि ? 'सत्त्वे निविशतेऽपैति' इत्यादिलक्षणलक्षितस्य गुणस्य ग्रहणम्; नापि नञो गुणप्रतिषेधे यस्य गुणस्य हि भावादिवत्प्रवृत्तिनिमित्तमात्रस्य ग्रहणम्, सामान्यादेरपि प्रसङ्गात्; नापि लोकप्रसिद्धस्य शुक्लादेरेव ग्रहणम्; कण्टकस्य तैक्ष्ण्यमित्यादेरपीष्टत्वात्; गुणशब्देन च केवलगुणवाचिनो गुणोपसर्जनद्रव्यवाचिनश्च व्याप्तिन्यायाश्रयेण गृह्यन्ते। तत्र गुणस्य गुण्यपेक्षत्वात्केवल-

### न्यासः

पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन॥ छात्राणां पञ्चम इति। 'तस्य पूरणे डट्' 'नान्तादसंख्यादेर्मट्' समुदायसमुदायिसम्बन्धे शेषलक्षणा षष्ठी। एवं बलाकायाः शौक्ल्यम्, काकस्य कार्ष्ण्यमित्यत्र गुणगुणिसम्बन्धे शेषलक्षणैव षष्ठी वेदितव्या। ब्राह्मणस्य कर्त्तव्यमित्यत्र 'कृत्यानां कर्त्तरि वा' इति षष्ठी। अथ कथं गोविंशतिरिति षष्ठीसमासः, यावता संख्याया गुणत्वात् प्रतिषेधेन भवितव्यम् ? नैष दोषः, यदयं 'शतसहस्रान्ताच्च निष्कात्' इत्याह, तज् ज्ञापयति—संख्यायाः

तार्थाः = तृप्त्यर्थाः । फलानां सुहितः । फलानां तृप्तः । सत्—ब्राह्मणस्य कुर्वन् । ब्राह्मणस्य कुर्वाणः । अव्यय—ब्राह्मणस्य कृत्वा । ब्राह्मणस्य हृत्वा । तव्य—ब्राह्मणस्य कर्तव्यम् । तव्यता सानुबन्धकेन समासो

पदमञ्जरी

गुणवचनेर्गुणेन समासनिषेधः-कण्टकस्य तैक्ष्ण्यमिति । गुणवचनैस्तु तत्सम्बन्धिनो निषेधः—ब्राह्मणस्य शुक्ला दन्ता इति, न चात्र दन्तापेक्षया ब्राह्मणस्येति षष्ठी, ततश्च शुक्लेनासम्बन्धादप्रसङ्ग एव समासस्य । यदा तर्ह्यर्थात्प्रकरणाद्वा दन्ताद्यर्थ एव शुक्लादिशब्दस्य वृत्तिर्विज्ञाता भवति, तदा तत्सम्बन्ध एव षष्ठीत्यस्ति समासप्रसङ्गः, 'शतसहस्रान्ताच्च निष्कात्', 'क्रोशशतयोजनशतयोरुपसंख्यानम्' 'खारीशतमपि न ददाति' इत्यादि *मुनित्रय*प्रयोगाद् गोविंशतिरित्यादौ संख्यया समासो न निषिध्यते । संज्ञाप्रमाणत्वादुत्तरपदार्थप्राधान्यमित्यादिप्रयोगदर्शनादनित्यो गुणेन निषेध इति करणपाटवं बुद्धिमान्द्यं यत्नगौरवमित्यादिसिद्धिः ।

*फलानां सुहित इति* । करणस्यैव शेषत्वविवक्षया षष्ठी, शेषत्वविवक्षैव च नियता सुहितार्थयोगे करणस्येत्याहुः, कृद्योगलक्षणाया एव षष्ठ्या निष्ठायोगे निषेधः । *ब्राह्मणस्य कुर्वन्निति* । नेयं घटाद्यपेक्षया षष्ठी—ब्राह्मणस्य घटं कुर्वन्निति, एवं ह्यसामर्थ्यादेव समासस्याप्रसङ्गः; किं तर्हि ? कुर्वन्निति किङ्कर उच्यते, स हि कुर्वन् भवति, ततो यथा ब्राह्मणस्य पाचक इति साक्षादेव पाचकेन सम्बन्धो न पुनरोदनद्वारेण, तद्वदिहापीति द्रष्टव्यम् । चोरस्य द्विषन्निति च सत उदाहरणम्, अत्र 'द्विषः शतुर्वा वचनम्' इति पक्षे षष्ठी भवति । *ब्राह्मणस्य कृत्वेति* । ब्राह्मणार्थं कृत्वेत्यर्थः, सम्बन्धसामान्यरूपेण विवक्षितत्वात् षष्ठी । पुरा सूर्यस्योदेतोरिति चोदाहरणम्, अत्र ह्यव्ययप्रतिषेधे 'तोसुनोरप्रतिषेधः' इति कर्त्तर्येव षष्ठ्यस्ति । एवं वृक्षस्योपरीत्यादिकमप्युदाहरणम् । *तव्यता सानुबन्धकेनेति* । 'निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम्' इति भावः । *ब्राह्मणकर्त्तव्यमिति* । कर्त्तरि षष्ठ्याः समासः कृदुत्तरपदप्रकृतिस्वरेणान्तस्वरितमेतत्, निरनुबन्धकेन तु समासे उत्तरपदं मध्योदात्तं स्यात्, सोऽयं स्वरार्थस्तव्येन

न्यासः

समासो भवतीति । न हि तेन विना शतसहस्रान्तता निष्कस्य प्रातिपदिकस्य सम्भवति । **तव्यता सानुबन्धकेन समासो भवत्येवेति** । निरनुबन्धकपरिभाषया तस्याग्रहणात् । **ब्राह्मणकर्त्तव्यमिति** । 'गतिकारकोपपदात् कृत्' इति प्रकृतिस्वरेणान्तस्वरितमुत्तरपदं भवति । यदि तर्हि निरनुबन्धकेनापि समासः स्यात् प्रकृतिस्वरे कृते प्रत्ययस्वरेण मध्योदात्तः स्यात्, स चानिष्टः; अतो निरनुबन्धकेन समासः प्रतिषिध्यते, न तु सानुबन्धकेन । किञ्च स्यादिति ? एवं मन्यते—क्रियमाणेऽप्येतस्मिन् प्रतिषेधे विशेषण-

भवत्येव—ब्राह्मणकर्त्तव्यम् । समानाधिकरण—शुकस्य माराविदस्य, राज्ञः पाटलिपुत्रकस्य, पाणिनेः सूत्रकारस्य । किं च स्यात् ? पूर्वनिपातस्यानियमः स्यात् । अनन्तरायां तु प्राप्तौ प्रतिषिद्धायां 'विशेषणं विशेष्येण' इति भवत्येव समासः । पूर्वनिपातश्च तदा नियोगतो विशेषणस्यैव ॥

## क्तेन च पूजायाम् ॥ १२ ॥

'मतिबुद्धिपूजार्थेभ्यश्च' इति वक्ष्यति, तस्येदं ग्रहणम् । पूजाग्रहण-

### पदमञ्जरी

निषेधः । *शुकस्य माराविकस्येति* । मा रावीत्याहेति माराविकः, 'तदाहेति माशब्दादिभ्य उपसंख्यानम्' इति ठक्, शब्देन क्रियायाः प्रतिषेधको माराविकः, संज्ञेषा शुकविशेषस्य, क्वचित्तु *माराविदस्येति* पाठः, तत्र माराविशब्दं ददातीति माराविदः, स एवार्थः । *किं च स्यादिति* । भवितव्यमेवात्र विशेषणसमासेन, तत् षष्ठीसमास एवास्तु, को दोष इति प्रश्नः । *पूर्वनिपातानियमः स्यादिति* । द्वयोरपि प्रथमानिर्दिष्टत्वेनोपसर्जनत्वादिति भावः । ननु विशेषणसमासेऽपि द्वयोरपि यत्र विशेषणविशेष्यभावस्तत्रेत्युक्तम्, अतस्तेनापि समासे विशेषणमिति प्रथमानिर्देशो द्वयोरपि तुल्यः । अथ तत्राप्रधानमुपसर्जनमार्थं चाप्राधान्यमिति द्रव्यगुणादिषु तेन प्रकारेण व्यवस्था, षष्ठीसमासेऽपि तथैव व्यवस्था भविष्यति । तस्माद्यत्तत्र प्रत्युदाहरणम्—तक्षकः सर्प इति, तयोः षष्ठ्यन्तयोः समासप्रसङ्ग एव दोषः, तन्निवृत्तये च प्रतिषेध इति वाच्यम् । तदिह 'किं च स्यात्' इत्यादिकमेवानुपपन्नम्, उदाहरणं तूपपन्नम् यदि माराविकशब्दः संज्ञा । अथ सोऽपि योगवृत्तिः, तर्हि तदप्यनुपपन्नम् । एवं पाटलिपुत्रकेऽपि द्रष्टव्यम् ॥

*क्तेन च पूजायाम्* ॥ *तस्येति* । मत्यादिसूत्रविहितस्य सर्वस्यैव क्तस्य ग्रहणं

### न्यासः

समासेनात्र भवितव्यमेव । तदवश्यम्भाविनि समासे यदि षष्ठी समासः स्यात् तदा को दोषः स्यात्, यत्परिहृतयेऽयं षष्ठीसमासः प्रतिषिध्यत इति ?—पूर्वनिपातानियम इत्यादिना दोषमाह । यदि षष्ठीसमासः स्यात् तदा द्वयोरपि पदयोः प्रथमानिर्दिष्टत्वादुपसर्जने सति पक्षे विशेष्यस्यापि पूर्वनिपातः स्यात्, स च नेष्यते । विशेषणसमासे सति विशेषणस्यैव समासशास्त्रे प्रथमानिर्दिष्टत्वात् पूर्वनिपातो भवतीति न भवत्येष दोषप्रसङ्गः ॥

**क्तेन चपूजायाम्** ॥ **'मतिबुद्धिपूजार्थेभ्यश्च' इति वक्ष्यतीति** । क्तमिति वाक्यशेषः । **तस्येदं ग्रहणमिति** । एतेन 'मतिबुद्धि'इत्यादिना सूत्रेण यो विहितः क्तः, तस्य पूजाया-

मुपलक्षणार्थम्। क्तो यः पूजायां विहितस्तेन षष्ठी न समस्यते। राज्ञां मतः। राज्ञां बुद्धः। राज्ञां पूजितः।

पूजायामिति किम्? छात्रस्य हसितं छात्रहसितम्॥

पदमञ्जरी

न तु पूजायामेव विहितस्येत्यर्थः। कथं तर्हि पूजाग्रहणमित्याह--*पूजाग्रहणमिति*। विवक्षितस्य क्तस्य तटस्थमुपलक्षणं पूजाग्रहणम्, गृहस्येव काकः, न तु समासनिषेधार्थमित्यर्थः। तेन मतिबुद्ध्योरपि विहितस्य ग्रहणं भवतीति भावः। *पूजायां विहित इति*। वर्त्तमानादिति शेषः। *राज्ञामिति*। 'क्तस्य च वर्तमाने' इति षष्ठी। कथं राजसंमतः, राजाभिमत इति, अस्ति हि *भट्टिकाव्ये* प्रयोगः-'कानहं स राममहितः कृतवान्' इति, 'मह पूजायाम्' रामस्य महित इत्यर्थः? कश्चिदाह--"यदा वर्तमाने क्तस्तदा षष्ठीसमासनिषेधश्च, यदा भूते क्तस्तदा कर्तरि तृतीयैव भवति, यथा--'पूजितो यः सुरैरपि' इति, तस्याः 'कर्तृकरणे कृता बहुलम्' इति समासः" इति। स्यादेवं यदि भूते क्तो लभ्यः, न; ना-ऽसे तस्मिन्नारभ्यमाणः 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तस्तस्य बाधको भवति, यथा च वडवाया वृषे वाच्य इति अपत्ये प्राप्तो ठक् ततोऽपकृष्य विधीयते, अपत्ये त्वणेव भवतीति वक्ष्यति। एवं च 'पूजितो यः सुरैरपि' इत्यचिकित्स्योऽपशब्दः। त्वया ज्ञातो मया ज्ञात इति तु भवत्येव; तेनेत्यधिकारे उपज्ञात इति निर्देशात्।

अपर आह--'क्तेन च पूजायाम्' इत्यादिषु कारकषष्ठ्या एव निषेधः। तदेव तु कर्त्रादिकारकं यदा शेषरूपेण विवक्ष्यते तदा भवत्येव समास इति। तत्र स्वरे विशेषः, कारकषष्ठ्याः समासे कृत्स्वरो भवति, शेषषष्ठ्याः समासे समासान्तोदात्तत्वमिति। एवं तु यत् 'जनिकर्तुः प्रकृतिः', 'तत्प्रयोजको हेतुश्च' इत्यादावुच्यते-'निपातनात्समासः' इति, तदनुपपन्नम्; शेषषष्ठ्या एव समासस्य सिद्धत्वात्। अथ येऽमी नवीना वैयाकरणा आरभन्ते तदपार्थकमापद्येत। तस्मादाप्तप्रयोगस्य यथाकथंचिन्निर्वाहः, न तु यथारुचि पद्ययोग इति धीरा मन्यन्ते॥

न्यासः

मन्यत्र च सर्वस्य विहितस्येदं ग्रहणम्। न केवलं पूजायां यो विहितस्तस्यैवेष्यत इत्यभिप्रायः। अत एवाह--पूजाग्रहणमुपलक्षणार्थमिति। कस्योपलक्षणार्थम्? 'मतिबुद्धि इत्यादौ सूत्रे निर्दिष्टार्थस्य यः क्तो विधीयते तस्य मत्यादेः। तेन न केवलं पूजायां यः क्तो विहितस्तेन षष्ठीसमासप्रतिषेधो भवति, अपि तु मतिबुद्ध्योरपि यो विहितस्तेनापि। राज्ञां मत इति। 'क्तस्य च वर्त्तमाने' इति षष्ठी। पूजायां किम्? छात्रस्य हसितं छात्रहसितम्। 'नपुंसके भावे क्तः'। शेषलक्षणा षष्ठी॥

## अधिकरणवाचिना च ॥ १३ ॥

'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इति वक्ष्यति, तस्येदं ग्रहणम्। अधिकरणवाचिना क्तेन षष्ठी न समस्यते। इदमेषामासितम्। इदमेषां यातम्। इदमेषां भुक्तम् ॥

## कर्मणि च ॥ १४ ॥

'क्तेन' इति निवृत्तम्। कर्मग्रहणं षष्ठीविशेषणम्। कर्मणि च या षष्ठी सा न समस्यते। 'उभयप्राप्तौ कर्मणि' इत्यस्याः षष्ठ्या इदं ग्रहणम्। आश्चर्यो गवां दोहोऽगोपालकेन। रोचते ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं देवदत्तेन। विचित्रा सूत्रस्य कृतिः पाणिनिना ॥

### पदमञ्जरी

*अधिकरणवाचिना च* ॥ 'अधिकरण' इत्येव सिद्धे वाचिग्रहणं चिन्त्यप्रयोजनम्, कथम्? 'किंवृत्ते लिप्सायाम्' 'यद्वृत्तान्नित्यम्' इति, नायमधिकरणे क्तः, क्व तर्हि? भावे। किमो वृतं यस्मिन् यदो वृतं यस्मिन्निति व्यधिकरणपदो बहुव्रीहिः ॥

*कर्मणि च* ॥ *उभयप्राप्तौ कर्मणीति*। अनेकार्थत्वान्निपातानामितीत्यर्थे चशब्दोऽयम्, तेन कर्मणीत्युच्चार्य या षष्ठी विधीयते सा न समस्यत इत्यर्थः। यदि च या काचन कर्मणि षष्ठी गृह्येत 'कर्तरि च' इति निषेधं न कुर्याद्; अनेनैव सिद्धत्वात्। *साधु पयसः पानमिति*। कर्मणि च येन संस्पर्शादिति नित्यसमासार्थवचनमिति वक्ष्यति, तत्र पयः पानं सुखमित्युदाहरिष्यते। इदं तु शरीरसुखस्याविवक्षायां रोगाद्यभिभूतोऽशक्नुवन्नेव यदा साधु पिबति, तदा द्रष्टव्यम् ॥

### न्यासः

**अधिकरणवाचिना च** ॥ इदमेषामासितमिति। अस्यतेऽस्मिन्नित्यधिकरणे क्तः। 'अधिकरणवाचिनश्च' इति षष्ठी। एवं पीतमित्यादावपि। अधिकरणवाचिनेति किम्? छात्रस्य हसितं छात्रहसितमिति ॥

**कर्मणि च** ॥ 'उभयप्राप्तौ कर्मणि' इत्यस्याः षष्ठ्या इदं ग्रहणमिति। एतच्च पुनः 'कर्त्तरि च' इति प्रतिषेधाद् विज्ञायते। यदि हि कर्मणि या काचित् षष्ठी तस्याः सर्वस्या इदं ग्रहणं स्यात् तदा 'कर्त्तरि च' इति पुनः प्रतिषेधं न कुर्यात्; अनेनैव सिद्धत्वात्। यत्र हि कर्त्तरि तृजकौ विहितौ तत्र नियोगतः कर्मणि षष्ठ्या भवितव्यम्। तस्मात् 'कर्त्तरि च' इति पुनः प्रतिषेधवचनादुभयप्राप्तौ कर्मणि या षष्ठी विहिता तस्या अत्र ग्रहणमवसीयते। 'उभयप्राप्तौ कर्मणि' इति षष्ठ्या इह ग्रहणादिध्मव्रश्चनः; पलाशशातनः, इक्षुभक्षिकां मे धारयसीति समासनिषेधो न भवति ॥

## तृजकाभ्यां कर्त्तरि ॥ १५ ॥

कर्तृग्रहणं षष्ठीविशेषणम् । कर्त्तरि या षष्ठी सा तृचाऽकेन च सह न समस्यते । भवतः शायिका । भवत आसिका । भवतोऽग्रगामिका । (तृच् कर्त्तर्येव विधीयते, तत्प्रयोगे कर्तरि षष्ठी नास्ति । तस्मात्तृज्ग्रहणमुत्तरार्थम् ।)

कर्त्तरीति किम् ? इक्षुभक्षिकां मे धारयसि ॥

## कर्त्तरि च ॥ १६ ॥

कर्त्तरि च यौ तृजकौ ताभ्यां सह षष्ठी न समस्यते । सामर्थ्या-

### पदमञ्जरी

*तृजकाभ्यां कर्तरि* ॥ *कर्तृग्रहणं षष्ठीविशेषणमिति* । अथ कस्माद्विपर्ययो नाश्रीयते—इह तृजकविशेषणं कर्तृग्रहणमुत्तरत्र षष्ठीविशेषणमिति, एवं तृज्ग्रहणमुत्तरार्थमिति न वक्तव्यं भवति ? उच्यते; 'नित्यं क्रीडाजीविकयोः' इत्यत्र तृज्ग्रहणस्याननुवृत्तिः शङ्क्येत 'कर्त्तरि च' इत्यत्र सम्बन्धासम्भवात्, न हि तृज्प्रयोगे कर्तरि षष्ठी सम्भवतीति । ननु च 'तृज्क्रीडाजीविकयोर्नास्तीत्यक एवोदाह्रियते' इति वक्ष्यति, एवं तर्हि तथानाश्रितमित्येव । *भवतः शायिकेति* । 'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' । *तृच्प्रयोगे कर्त्तरि षष्ठी नास्तीति* । तेनैव कर्तुरभिहितत्वात् ।

*इक्षुभक्षिकामिति* । कर्मणि षष्ठ्याः समासः । *मे इति* । 'धारेरुत्तमर्णः' इति संप्रदाने चतुर्थी ॥

*कर्त्तरि च* ॥ सम्भवे व्यभिचारे च सति विशेषणविशेष्यभावो भवतीत्याह—

### न्यासः

**तृजकाभ्यां कर्त्तरि** ॥ भवतः शायिकेत्यादौ 'भावे पर्यायार्हर्णोत्पत्तिषु ण्वुज् भवति' इति 'कर्तृकर्मणोः कृति' इति कर्त्तरि षष्ठी । तृचा योगे कर्त्तरि षष्ठी नास्ति, तेनैव कर्त्तुरभिहितत्वात्, तर्हि किमर्थं तृचो ग्रहणमित्याह—तस्मादित्यादि । इक्षुभक्षिकां मे धारयसीति । पूर्ववण् ण्वुच् । अत्रेक्षुशब्दात् कृद्योगे कर्मणि षष्ठी । 'मे' इति कर्त्तरि षष्ठी कृद्योगैव । 'उभयप्राप्तौ कर्मणि' इत्यत्र न प्रवर्त्तते; 'अकाकारयोः प्रतिषेधः' इति वचनात् ॥

**कर्त्तरि च** ॥ इतरत्र व्यभिचाराभावादिति । तृचि । सामर्थ्यादकस्येदं विशेषणम् । कर्तृग्रहणमित्यत्र हेतुः । सम्भवव्यभिचारे हि विशेषणविशेष्यभावो भवति । न हि तृच् कर्त्तारं व्यभिचरति; तस्य कर्त्तर्येव विधानात् । अकस्तु व्यभिचरति; तस्य भावेऽपि

दकस्य विशेषणार्थं कर्तृग्रहणमितरत्र व्यभिचाराभावात् । अपां स्रष्टा । पुरां भेत्ता । वज्रस्य भर्त्ता । ननु च भर्तृशब्दो ह्ययं याजकादिषु पठ्यते ? संबन्धिशब्दस्य पतिपर्यायस्य तत्र ग्रहणम् । अकः खल्वपि—ओदनस्य भोजकः । सक्तूनां पायकः ॥

नित्यं क्रीडाजीविकयोः ॥ १७ ॥

'न' इति निवृत्तम्, न तृजकौ । नित्यं समासो विधीयते । क्रीडायां जीविकायां च नित्यं षष्ठी समस्यते, तत्पुरुषश्च समासो भवति । तृच् क्रीडाजीविकयोर्नास्तीत्यक एवोदाह्रियते—उद्दालकपुष्प-

पदमञ्जरी

*सामर्थ्यादिति । सम्बन्धिशब्दस्येति ।* अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति भावः । अन्यस्त्वाह—होतृशब्दसाहचर्यादिति; तन्न, न हि तत्र बह्वृचो होता गृह्यते । स एव सम्बन्धिशब्दः क्षीरहोतेत्यादौ क्षीरस्य क्षेप्तेत्येव गम्यते ॥

*नित्यं क्रीडाजीविकयोः ॥ नेति निवृत्तमिति ।* नित्यग्रहणाद्, महाविभाषाधिकाराद्विकल्पेनैव पाक्षिकस्य प्रतिषेधस्य सिद्धत्वान्नित्यः प्रतिषेधो भविष्यति, किं नित्यग्रहणेन ! *तृच् क्रीडाजीविकयोर्नास्तीति* ' वामनस्तु 'अके जीविकार्थे' इत्यत्र 'अक इति किं रमणीयकर्ता' इति जीविकायां तृचं प्रत्युदाहरिष्यति । स

न्यासः

विधानात् । अतः सामर्थ्यादकस्यैव विशेषणं कर्तृग्रहणम्, न तृचः । **अपां स्रष्टेति** । अपामिति कर्मणि षष्ठी । **अपां स्रष्टेति** तृच्, व्रश्चादिना षत्वम् । 'सृजिदृशोर्झल्यमकिति' इत्यमागमः ।

**ननु चेत्यादि** । याजकादिपाठाद् भवितव्यमेवात्र समासेनेत्यभिप्रायः । **सम्बन्धिशब्दस्येत्यादिना** परीहारः । होतृशब्देन सम्बन्धिशब्देन साहचर्याद् भर्तृशब्दोऽपि सम्बन्धिशब्दस्तत्र गृह्यते, अयन्तु क्रियाशब्दः—बिभर्त्तीति भर्त्ता । **सक्तूनां पायक इति** 'आतो युक् चिण्कृतोः' इति युक् । अथ किमर्थं तृचः सानुबन्धकस्योच्चारणम् ? तृनो निवृत्त्यर्थमिति चेत्, नैतदस्ति; तद्योगे 'न लोकाव्ययनिष्ठा' इत्यादिना षष्ठीप्रतिषेधात् । एवं तर्ह्येतदेव ज्ञापकम्—तृन्योगेऽपि क्वचित्षष्ठी भवतीति । तेन 'भीष्मः कुरूणां भयशोकहर्ता' इत्यादि सिद्धं भवति ॥

**नित्यं क्रीडाजीविकयोः ॥ उद्दालकपुष्पभञ्जिकेति** । 'रोगाख्यायां ण्वुल् बहुलम्' इत्यनुवर्त्तमाने 'संज्ञायाम्' इति ण्वुल् । उद्दालकपुष्पादिषु कर्मणि षष्ठी । **दन्तलेखकः, नखलेखक इति** । 'ण्वुल्तृचौ' इति ण्वुल् । क्रीडायां विषये 'षष्ठी' इति सूत्रेण महाविभाषया विकल्पेन समासे प्राप्ते जीविकायाञ्च 'कर्त्तरि च' इति निषेधे प्राप्तेऽयमा-

भञ्जिका । वारणपुष्पप्रचायिका । जीविकायाम्—दन्तलेखकः, नख-लेखकः ।

क्रीडाजीविकयोरिति किम् ? ओदनस्य भोजकः ॥

## कुगतिप्रादयः ॥ १८ ॥

'नित्यम्' इति वर्त्तते । कुशब्दोऽव्ययं परिगृह्यते, गत्यादिभिः-साहचर्यात्, न द्रव्यवचनः । कुगतिप्रादयः समर्थेन शब्दान्तरेण सह नित्यं समस्यन्ते, तत्पुरुषश्च समासो भवति । कुः पापार्थे—कुपुरुषः । गति—उररीकृतम्, यदूरीकरोति । प्रादयः—दुर्निन्दायाम्, दुष्पुरुषः । स्वती पूजयाम्, सुपुरुषः, अतिपुरुषः । आपिङ्गलः ।

### पदमञ्जरी

मन्यते—मा भूत्क्रीडायां तृच्, लक्षणाभावात्, जीविकायां तु ण्वुल्तृचाविति ण्वुलिव तृच् कस्मान्न स्यादिति । अन्ये तु तदनुसारेणेदमप्येवं व्याचक्षते—क्रीडाजीविकयोर्नास्तीति द्वयोर्नास्ति, किन्त्वन्यतरत्रैवेत्यर्थः । *अक एवोदाह्रियत इति* । उभयत्रेत्यर्थः । *उद्दालकपुष्पभञ्जिकेत्यादौ* संज्ञायामिति ण्वुल् । नित्यग्रहण-मुत्तरार्थम् । न हि वाक्येन क्रीडाजीविकयोरवगतिरस्ति, क्रियाकारकसम्बन्ध-मात्रावगमात् ॥

*कुगतिप्रादयः ॥ कुशब्दोऽव्ययं गृह्यत इति* । स्वरादिष्वपठितोऽप्ययं पठितव्य इति भावः । नित्यसमासविषयस्यास्य पूर्वपदप्रकृतिस्वराणामव्ययत्वम्, यथा वक्ष्यति—अव्यये नञ्कुनिपातानामिति वक्तव्यमिति । *न द्रव्यवचन इति* । पृथिव्यादिद्रव्ये यो वर्तते स न गृह्यत इत्यर्थः । *दुर्निन्दायामिति* । प्रशस्ते ह्येषान्निन्दा भवति, पापं तु वस्तुस्थित्या गर्हितमिति द्वयोरप्युपादानम् ।

### न्यासः

रम्भः । तत्र नित्यग्रहणं किमर्थम् ? जीविकार्थम् । इतरत्र त्वारम्भसामर्थ्यान्नित्योऽयं भविष्यति । जीविकायां त्वसति नित्यग्रहणे महाविभाषाधिकाराद् विकल्पेन समासः स्यादिति तदर्थं नित्यग्रहणं कृतम्, उत्तरार्थञ्च ॥

**कुगतिप्रादयः ॥ कुशब्दोऽव्ययं परिगृह्यत इति** । अलिङ्गसंख्यत्वादव्ययत्वम्, न तु निपातेषु पाठात् । न ह्ययं तत्र पठ्यते । **न द्रव्यवचन इति** । पृथिव्यादौ यो द्रव्ये वर्त्तते तस्यात्र ग्रहणं न भवति । कुत एतदित्याह—**गत्यादिभिः साहचर्यादिति** । गतार्थम् ।

प्रायिकं चैतदुपाधिवचनम्। अन्यत्रापि हि समासो दृश्यते। कोष्णम्, कवोष्णम्, कदुष्णम्। दुष्कृतम्।अति स्तुतम्। आबद्धम् इति।

* प्रादयो गताद्यर्थे प्रथमया *। प्रगत आचार्यः प्राचार्यः। प्रान्तेवासी।

* अत्यादयः क्रान्ताद्यर्थे द्वितीयया *। अतिक्रान्तः खट्वाम् अतिखट्वः। अतिमालः।

* अवादयः क्रुष्टाद्यर्थे तृतीयया *। अवक्रुष्टः कोकिलया अवकोकिलः।

*पर्यादयो ग्लानाद्यर्थे चतुर्थ्या *। परिग्लानोऽध्ययनाय पर्यध्ययनः। अलं कुमार्यै अलंकुमारिः।

पदमञ्जरी

*प्रायिकमिति*। अन्यथेषदर्थे चेति कोः कादेशविधानमनुपपन्नं स्यात्। दुष्कृ*तमिति*। दुर्निन्दायामिति विषयनिर्देशो गतित्वेन प्राप्तस्यापि समासस्य नियामकः स्यादिति मन्यते। यदा तु प्रादिग्रहणप्राप्तस्यैव नियामकस्तदा गतित्वादेवात्र सिद्धः समासः। दुरत्र कृच्छ्रार्थोऽनभिधानात्कृतेः खलू न भवति, दुष्कर इत्यादावुपपदसमासः, आमन्द्रैरिन्द्र हरिभिरित्याङो मन्द्रं प्रत्यगतित्वादनीषदर्थत्वाच्च समासाभाव इत्येकस्त्वयं न भवति। *सुष्टुतमिति*। सुशब्दोऽतिशये, न पूजायाम्। अत एवोपसर्गनिबन्धनं षत्वम्। *अतिस्तुतमिति*। 'अतिरतिक्रमणे च' इति कर्मप्रवचनीयत्वात्षत्वाभावः॥

*प्रादयो गताद्यर्थ इति*। वृत्तिविषये गताद्यर्थवृत्तयः प्रादयो गतित्वाभावेऽपि प्रादिग्रहणेन समस्यन्त इति।

न्यासः

कोष्णमिति। 'ईषदर्थे च' इति कोः कादेशः। कवोष्णमिति। 'कवञ्चोष्णे' इति कवादेशः। कदुष्णमिति। 'कोः कत्तत्पुरुषेऽचि' इति कत्। कुपुरुष इति पापार्थे। दुष्कृतमिति। 'दुस्' कृच्छ्रार्थे वर्त्तते। 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वम्। सुस्तुतमिति सुशब्दोऽतिशये वर्त्तते। अतिस्तुतमिति अतिरतिक्रमणे। आबिद्धमिति। आङ् क्रियायोगे, मर्यादायां वा।

पर्यादयो ग्लानाद्यर्थ इति। पर्यादिराकृतिगणः। पर्यध्ययन इति परिग्लानोऽध्ययनायेत्यर्थः।

* निरादयः क्रान्ताद्यर्थे पञ्चम्या *। निष्क्रान्तः कौशाम्ब्याः, निष्कौशाम्बिः। निर्वाराणसिः।

* इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् *। वाससी इव।

* प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः *। वृक्षं प्रति विद्योतते विद्युत्। साधुर्देवदत्तो मातरं प्रति ॥

उपपदमतिङ् ॥ १९ ॥

'नित्यम्' इति वर्तते। उपपदमतिङन्तं समर्थेन शब्दान्तरेण सह समस्यते नित्यम्, तत्पुरुषश्च समासो भवति। कुम्भकारः। नगरकारः।

अतिङिति किम्? एधानाहारको व्रजति।

**पदमञ्जरी**

*पर्यध्ययन इति*। परिश्रान्तोऽध्ययनार्थमित्यर्थः।

*वाससी इवेति*। 'वसेर्णिच्च' इत्यसुन्प्रत्ययान्तो वासःशब्दः, वस्त्रशब्दः ष्ट्रन्प्रत्ययान्तः, द्वावपि नित्याद्युदात्तौ।

*प्रादिप्रसङ्ग इति*। सूत्रे प्रादिग्रहणमगत्यर्थमिति कर्मप्रवचनीयानां प्रतिषेध उच्यते, प्रत्यादिविषयश्चायं निषेधः। स्वत्योस्तु समासो भवत्येव। *वृक्षं प्रतीति*। कर्मप्रवचनीयेन योगाद् द्वितीयावत्समासस्यापि प्रसङ्गः, उदात्तवता तिङा गतेः समासवचनम्—यो जात एव पर्यभूषत्, यः शम्बरमन्वविन्दत्, योऽन्तरिक्षं विममे, यौ वै प्रजवं यातास्, अपथेन प्रतिपद्यते ॥

*उपपदमतिङ्* ॥ *एधानाहारको व्रजतीति*। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति ण्वुल्। *अतिङिति किमिति*। येनाभिप्रायेण पृष्टं तमाविष्करोति।

**न्यासः**

**वाससी इवेत्यादि**। 'सर्वधातुभ्योऽसुन्' इत्यनुवर्त्तमाने 'वसेर्णिच्च' इत्यसुन्प्रत्ययान्तो वासःशब्दो व्युत्पादितः, वस्त्रशब्दोऽप्यौणादिकष्ट्रन्प्रत्यान्तः, तेन द्वावप्येतौ 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तौ।

**प्रादिप्रसङ्गे इत्यादि**। प्रादिग्रहणे यः प्रसङ्गः समासशास्त्रस्य तत्र कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः। व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—लक्षणादिष्वर्थेषु कर्मप्रवचनीयसंज्ञा भवति। न च तेऽर्थाः समासेन गम्यन्त इत्यनभिधानात् कर्मप्रवचनीयानां समासो न भवति। यत्र तेऽर्था गम्यन्ते तत्र भवत्येव समासः—अतिस्तुतमिति ॥

**उपपदमतिङ्** ॥ एधानाहारको व्रजतीति। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्'

ननु च 'सुप् सुपा' इति वर्त्तते, तत्र कुतस्तिङन्तेन सह समासप्रसङ्गः ? एतज्ज्ञापयति—'एतयोर्योगयोः सुप् सुपेति न संबध्यते'

**पदमञ्जरी**

ननु चेति । *एतज्ज्ञापयतीति* । स्यादेतत्—मुख्यस्य तिङन्तस्य प्रतिषेधोऽनर्थक इति । यस्तेन समानार्थः सुबन्तस्तस्य प्रतिषेधो विज्ञायते । तत्र यद्यपि कालकारकसंख्योपग्रहयुक्तः पूर्वापरीभूतः क्रियारूपस्तिङन्तार्थप्रधानोऽर्थो न सुबन्तस्य सम्भवति, तथापि क्रियावाचित्वमात्रेण तदर्थत्वमाश्रीयते, क्रियावाच्युपपदं न समस्यत इत्यर्थः । तेन कारको गतः, कारकस्य व्रज्येति गतव्रज्याशब्दयोः कारकशब्देन समासो न भवति; अन्यथा हि क्रियार्थायामिति सप्तमीनिर्देशेनोपपदत्वादनयोरपि समासः स्यादिति ? तन्न; अनुपपदत्वात् । क्रियायां क्रियार्थायामिति सप्तमीनिर्देशेन क्रियावाचिन उपपदत्वम्, धातुरेवात्र क्रियावचनस्तदाश्रयश्च ण्वुल् प्रत्ययः । गतशब्दस्तु क्रियोपसर्जनं कर्त्तारमाह, व्रज्याशब्दोऽपि यस्तस्य सिद्धता नाम धर्मस्तत्र घञादयो भवन्तीति धात्वर्थस्य सिद्धतायां वर्तन्ते, अतो यत्क्रियावाचित्वादुपपदं न तत्सुबन्तम् , यत्सुबन्तं न तत्क्रियावाचि नाप्युपपदमिति नार्थ एवमनेनातिङ्ग्रहणेन ।

*एतयोर्योगयोरिति* । ननु चास्मिन्नेव योगे तदनभिसम्बन्धो युक्तः, यत्रातिङ्ग्रहणमस्ति, न पूर्वत्र ? एवं मन्यते—योगविभागेनातिङ्ग्रहणं पूर्वसूत्रेणापि सम्बन्धनीयमिति । यद्येवम्, कुशब्दे प्रादिषु चातिप्रसङ्गः, तत्रापि प्राक् सुबुत्पत्तेः समासः स्यात् ? एवं तर्हि पूर्वसूत्रे गतिग्रहणं पृथक्कृत्य तेनैवातिङ्ग्रहणं सम्बन्धनीयम् ।

गतिकारकोपपदानाम्, अस्यायमर्थः—गतीनां कारकाणामुपपदानां च कृद्भिः सह यः समासस्तेन तेन लक्षणेन स उत्तरपदात्सुबुत्पत्तेः प्रागेव कार्यः, पूर्वपदन्तु सुबन्तमेव समस्यत इति । गतीनां तावत्—व्याजिघ्रतीति व्याघ्री, 'पाघ्राध्माधेट्दृशः शः' इति प्राप्तस्य जिघ्रतेः 'संज्ञायां प्रतिषेधो वक्तव्यः' इति निषेधात् 'आतश्चोपसर्गे' इति कः, व्याङोर्घ्रशब्देन गतिसमासः, स यद्युत्तरपदे सुबन्ते जाते पश्चात्स्यात्, ततः सुबुत्पत्तये संख्याकर्मादियोगो विवक्षितव्यः, तद्योगाच्च प्रागेव लिङ्गयोगः स्वार्थमभिधाय शब्द इति न्यायात्, ततश्च लिङ्गनिमित्तः प्रत्ययो

**न्यासः**

इति ण्वुल् । एतयोर्योगयोः सुप्सुपेति नाभिसम्बध्यत इति । ननु चास्मिन्नेव योगे तदनभिसम्बन्धो युक्तो यत्रातिङ्ग्रहणमस्ति, न तु पूर्वसूत्रेण, न हि तत्रातिङिस्येतदस्ति ? एवं मन्यते—'अतिङ्' इति योगविभागः क्रियते, स च पूर्वसूत्रस्यापि शेषभूतो विज्ञायते । नन्वेवमप्यतिङिति प्रथमान्तेन निर्देशात् प्रथमान्तस्यैव सुबित्यस्य

इति। तेन 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' इत्येतदुपपन्नं भवति। अश्वक्रीती। धनक्रीती॥

पदमञ्जरी

भवन् ग्रशब्दमात्रस्याजातिवाचित्वादाप् स्यात्, ततश्च व्याङोर्ग्राशब्देन समासः, ततो व्याघ्राशब्दस्य जातित्वेऽप्यनकारान्तत्वाज्जातिलक्षणो ङीष् न स्यात्; प्राक् सुबुत्पत्तेः समासो भवन् लिङ्गयोगमपि नापेक्षत इत्यन्तरङ्गत्वात्स एव तावद्भवति पश्चात्स्त्रीप्रत्ययो भवन्ङीषेव भवति, पूर्वपदस्य तु सुबन्तत्वात्पदकार्याणि भवन्ति, निर्गत इति रुत्वम्, संय्यन्तेति परसवर्णविकल्प इत्यादीनि। कारकाणाम्— अभ्रेलिप्ताऽभ्रलिप्ती, 'कर्तृकरणे कृता बहुलम्' इति समासः, यद्युत्तरपदस्य सुबन्तत्वं स्यात्पूर्ववट्टाप् स्यात्, ततः 'क्रीतात्करणपूर्वात्' 'क्तादल्पाख्यायाम्' इति ङीष् न स्याद्; अत इत्यधिकारात्, वचनसामार्थ्याद्वा पूर्वशब्दं व्यवस्थावचनमाश्रित्य वाक्यावस्थायामेव स्यात्, अत इत्यधिकारो वा व्यवच्छिद्येत। प्राक् सुबुत्पत्तेः समासे पूर्ववत्सिद्धमिष्टम्। अत्रापि पूर्वपदस्य सुबन्तात्वाच्चर्मक्रीतीत्यादौ नलोपादिकार्याणि भवन्ति। उपपदानाम्—कृच्छ्रेन पिबतीति 'सुपि स्थः' इत्यत्र सुपीति योगविभागात्कः, कच्छपी, व्याघ्रीतुल्यम्, माषान्वपति 'सुप्यजातौ णिनिस्ताच्छील्ये' माषवापिणी, ङीपः प्राक् समासे प्रातिपदिकस्यान्तो नकार इति णत्वं भवति। सुबन्तस्य तु समासे ङीप्समासस्यान्तो न तु नकार इति न स्यात्। अत्रापि पूर्वपदस्य सुबन्तत्वाच्चर्मकारादौ नलोपादिपदकार्यं भवत्येव। अत्रोपपद-

न्यासः

निवृत्तिर्युक्ता, न तृतीयान्तस्य सुपेत्यस्य? नैतदस्ति; सामान्येन सुबधिकारनिवृत्त्युपलक्षणार्थत्वाद् युक्ता द्वयोरपि निवृत्तिः। तेनेत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति। पूर्वयोगेऽप्यतिङ्ग्रहणाद् 'गत्युपसर्गसंज्ञकानां कृद्भिः सह प्राक् सुबुत्पत्तेः समासो भविष्यति' इत्येतदुपपन्नं भवति। तथा हि तत्र गतयः कृद्भिः सह समस्यन्ते, अस्मिंस्तु योगेऽतिङ्ग्रहणात् कारकोपपदानां कृद्भिः समासः सुबुत्पत्तेः प्रागुपपन्नो भवति। तथा ह्यत्र कारकं कृद्भिः सह समस्यन्ते प्राक् सुबुत्पत्तेः।

समासे सति यदिष्टं सिध्यति तद्दर्शयन्नाह—अश्वक्रीतीति। अत्राश्वः करणं कारकम्, तद्वाचिनोऽश्वशब्दस्य 'कर्तृकरणे कृता बहुलम्' इति समासः। सुबुत्पत्त्यां सत्यां यदि स समासः स्यात् तदा प्रागन्तरङ्गत्वाट्टाप् स्यात्, ततः सुप्, पश्चात् समासः, ततश्च 'क्रीतात् करणपूर्वात्' इति ङीष् न स्यात्; अत इत्यधिकारात्। ङीषस्त्ववकाशः—धनेन क्रीतं क्रयणं यस्याः। प्राक् सुबुत्पत्तेः समासे सति टाप् न क्रियते, प्रथमतः समास एव भवति, तेनादन्तत्वाद् ङीष् सिद्धो भवति। कथं पुनरश्वादेरुपपदत्वम्, यावता द्वितीयधात्वधिकारे सप्तम्या निर्देश कृतः? नैष दोषः, न हि द्वितीयधात्वधिकारे यत् सप्तम्या निर्दिष्टं तदेवोपपदसंज्ञं भवति। अपि तु

पदमञ्जरी

ग्रहणं गतिकारकव्यतिरिक्तोपपदपरिग्रहार्थम्–मृषावापिणी, इषद्दर्शाया अपत्यं ऐषद्दर्शेयः, अत्र दर्शशब्देन समासे सति समुदायात्स्त्रीभ्यो ढकं बाधित्वा दर्शाशब्दात् स्त्रीप्रत्ययलक्षणो ढक् स्यात्, स्त्रीप्रत्यये तदादिनियमाभावेऽपि दर्शाशब्दादपि कदाचित्स्यादित्येषा दिक् ।

जातान्यस्याः परिभाषायाः प्रयोजनानि । कथं पुनरतिङ्ग्रहणेनायमर्थः साधयितुं शक्यः, यावता प्रथमान्तमतिङ्ग्रहणं प्रथमान्तस्यैव सुब्ग्रहणस्य निवृत्तिं सूचयेदिति पूर्वपदे पदकार्याणि न स्युः, उत्तरपदे चोक्तमिष्टं न सिध्यति, तदेतत्क्रियमाणमतिङ्ग्रहणं विपर्ययमेव साधयति, तदपि गत्युपपदयोरेव कारकेषु तु 'कर्तृकरणे कृता बहुलम्' इत्यादावस्याः कथाया अप्रसङ्ग एव ? उच्यते—योगविभागेनातिङ्ग्रहणं गतिनापि संबध्यत इत्युक्तम्, एवं स्थिते योगद्वयविहितसमासमतिङ्ग्रहणेन विशेषयिष्यामः—गतिः समस्यते अतिङ् समासो भवति, उपपदं समस्यते अतिङ् च समासो भवतीति । तदेवम् 'माङि लुङ्' मा कार्षीदित्यादौ तिङन्तेन समासो मा भूदित्येवमर्थं क्रियमाणमतिङ्ग्रहणं सुपेति तृतीयान्तस्य निवृत्तिं साधयतीति गत्युपपदयोस्तावत्सिद्धमिष्टम् । वृत्तावपि 'सुप् सुपेति न संबध्यते' इति समुदायस्य निवृत्तिर्विवक्षिता, न केवलस्य सुब्ग्रहणस्य । प्रत्युदाहरणमपि दिङ्मात्रं प्रदर्शितम्, न हि तत्र तिङन्तेन समासः, किं तर्हि ? तिङन्तस्य सुबन्तेन, 'कर्तृकरणे कृता बहुलम्' इत्यत्रापि कृतेति न वक्तव्यम्, कथम् ? कर्तृकरणयोः क्रियापेक्षत्वात्क्रियावचनेन तावत्समासः, धातुश्च क्रियावचनः,

न्यासः

यदप्युपोच्चारितं पदं तदप्युपपदं भवत्येव, तदपि शास्त्रे 'इतरेतरान्योन्योपपदाच्च' इत्यादौ सूत्रे क्वचिदाश्रीयत एव । तस्मादश्वादिकमप्युपोच्चारितपदत्वादुपपदमिह विवक्षितम् । पदत्वं पुनस्तस्य पद्यते गम्यतेऽनेनार्थ इति कृत्वा; न तु सुबन्तत्वात्, इह सुपोऽसम्भवात् । सुबनुत्पत्तेः प्राक् समासाद् । यदि तर्हि यदुपोच्चारितं पदं तदपीहोपपदं गृह्यते तदातिप्रसङ्गः स्यात्; राजश्रितमित्यत्रापि प्राक् सुबुत्पत्तेः समासप्रसङ्गात्, ततश्च पदत्वाभावान्नलोपो न भवति ? असर्वविषयत्वादस्य ज्ञापकस्येत्यदोषः । न ह्यनेन सर्वत्र 'गतिकारकोपपदानां कृद्भिः प्राक् सुबुत्पत्तेः समासो भवति' इति ज्ञाप्यते, किं तर्हि ? क्वचिदेवेष्टविषये । कथमेतज् ज्ञायते ? 'तत्पुरुषे कृति बहुलम्' इति कृदन्त उत्तरपदे सप्तम्या अलुग्विधानात् । यदि तर्हि सर्वत्रैव गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः स्यात् तदा सप्तम्याः कृदन्त उत्तरपदेऽलुग्विधानं नोपपद्यते—बिलेशय इत्यादौ, सप्तम्या असम्भवात् । तस्मात् क्वचिदेव प्राक् सुबुत्पत्तेः समासः, न सर्वत्रेति । एवञ्च कृत्वा 'सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी' इत्यादौ टाबन्तेन समास उपपन्नो भवति ।"

## अमैवाव्ययेन ॥ २० ॥

पूर्वेणैव समासे सिद्धे नियमार्थं वचनम्। अव्ययेनोपपदस्य यः समासः सोऽमैव भवति, नान्येन। स्वादुङ्कारं भुङ्क्ते। संपन्नङ्कारं भुङ्क्ते। लवणङ्कारं भुङ्क्ते।

अमैवेति किम्? 'कालसमयवेलासु तुमुन्'--कालो भोक्तुम्।

एवकारकरणमुपपदविशेषणार्थम्--अमैव यत्तुल्यविधानमुपपदं

### पदमञ्जरी

धातोश्च द्वये प्रत्ययाः—कृतस्तिङश्च, तत्र सुबधिकारात्तिङन्तेनाप्रसङ्गः, तदेतत् कृद्ग्रहणं कृदन्तावस्थायामेव यथा स्यादित्येवमर्थमिति केचित्।

नेति वयम्। काष्ठैः पचतितराम्, दध्ना भुक्तपूर्वीत्यादौ तद्धितान्तेन समासो मा भूदित्येवमर्थं कृद्ग्रहणं कर्त्तव्यं कष्टश्रितादिषु प्राक्सुबुत्पत्तेः समासो न साधित इति कष्टश्रितेत्यादि न सिद्ध्यति। एव तर्हि गतिकारकोपपदानामिति परिभाषा पूर्वाचार्यैः पठिता सूत्रकारेणाप्यतिङ्ग्रहणेन तद्देश आश्रिता। तत्र सामान्यापेक्षं ज्ञापकमिति कृत्स्नमेव परिभाषार्थं ज्ञापयतीति सिद्धमिष्टम्।

तदेतत्प्रतिपद्यन्तां भाष्ये कृतपरिश्रमाः।
नान्ये सहस्रमप्यन्धाः सूर्यं पश्यन्ति नाञ्जसा ॥

*अमैवाव्ययेन* ॥ *स्वादुङ्कारमिति*। स्वादुमि णमुल्, स्वादुमीत्यत एव निपातनात्पूर्वपदस्य मान्तत्वम्। स्वादुमीत्यर्थग्रहणम्, तेन संपन्नकारमित्यत्रापि भवति। ननु सिद्धे विधिरारभ्यमाणो नियमाय भवति, एवकारः किमर्थः? इष्टतोऽवधारणार्थः, एवं यथा विज्ञायेत—अमेवाव्ययेनेति, मैवं विज्ञायि—अमाव्ययेनैवेति। अनव्ययस्यासम्भवादेवायं नियमो न भविष्यति। ननु चायमस्ति स्वशयं ब्राह्मणकुलमिति--'अधिकरणे शेतेः' इत्यच्, 'अतोऽम्' इति सोरम्भावः, अनेनानव्ययेन समासो मा भूदित्येवमर्थो नियमः स्यात्, न; अत्र ह्यन्तरङ्गत्वादनुत्पन्न एव सावुपपदसमासेन भाव्यम्, पश्चात्सुपेति विधानवेलायामनव्ययस्यामोऽसम्भवान्नियमान्तरेण वचनस्य चरितार्थत्वाद्विपरीतनियमो न भविष्यतीत्यत आह—*एवकारकरणमिति*। अमैव यदुपपदं तत्समस्यते, तदेव समस्यत इत्यक्षरार्थः,

### न्यासः

**अमैवाव्ययेन ॥ स्वादुङ्कारं भुङ्क्त इति**। 'स्वादुमि' इति णमुल्। स्वादुमीत्येतस्मादेव मान्तनिर्देशादुपपदस्य मकारान्तत्वं निपात्यते। यदि पूर्वेणैव समासे सिद्धे नियमार्थं वचनम्, एवञ्च सति सिद्धे विधिरारभ्यमाणोऽन्तरेणाप्येवकारकरणं नियमार्थो भविष्यति, तत् किमर्थमेवकरणमित्याह —**एवकारकरणमित्यादि**। किमर्थं

तस्य समासो यथा स्यात्, अमा चान्येन च यत्तुल्यविधानं तस्य मा भूत्—अग्रे भुक्त्वा, अग्रे भोजम् ॥

तृतीयाप्रभृतीन्यतरस्याम् ॥ २१ ॥

'अमैव' इत्यनुवर्त्तते । 'उपदंशस्तृतीयायाम्' इत्यतः प्रभृति यान्युपपदानि तान्यमैवाव्ययेन सहान्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति ।

पदमञ्जरी

न पुनरमेव समस्यत इति । तत्रामैव यदुपपदमित्यत्र तुल्यविधानमिति वाक्यशेषः । किं चामैव तुल्यविधानं येन वाक्येनामेव केवलो विधीयते, न प्रत्ययान्तरसहितस्तेन वाक्येन यदुपपदं विधीयते तत्र सप्तमीनिर्देशात्तदमैव तुल्यविधानम् । नियमाङ्गभूतस्त्वेवकारो नियमस्वभावादेव लभ्यते—अमैव यत्तुल्यविधानं न तु प्रत्ययान्तरोत्पत्तौ निमित्तमिति तदपेक्षयाऽनुपपदत्वाद् अव्ययान्तरेण समासो नाशङ्कनीयः । *अग्रे भोजमिति* । 'विभाषाग्रेप्रथमपूर्वेषु' इति क्त्वाणमुलौ । अव्ययग्रहणं किम् ? असत्यव्ययग्रहणे 'अमैव तुल्यविधानं तदेवोपपदं समस्यते' इत्युच्यमाने कुम्भकारादावपि न स्यात् । अथ पूर्वसूत्रस्यानवकाशत्वादमैव तुल्यविधानस्योपपदस्याव्ययविषयत्वात्तद्विषय एव नियमो विज्ञास्यत इत्युच्यते ? एवं त्वमैव नियमः स्याद्—अमन्तेनोपपदस्य यः समासः सोऽमैव तुल्यविधानस्येति, तत्र को दोषः ? अग्रेभोजमित्यत्रैव न स्यात्, अग्रे भुक्त्वा, कालो भोक्तुमित्यत्र तु स्यादेव; अव्ययग्रहणे तु सति अव्ययेनोपपदस्य यः समासः सोऽमैव तुल्यविधानस्येति विज्ञानान्न कश्चिद्दोषः ॥

*तृतीयाप्रभृतीन्यन्यतरस्याम्* ॥ *तृतीयाप्रभृतीनीति* । यत्पुनरमा चान्येन तस्याप्राप्त

न्यासः

पुनस्तदुपपदविशेषणार्थं क्रियत इत्यत आह—**अमैव तुल्यविधानमित्यादि** । येन वाक्येनामेव प्रत्ययो विधीयते न तु प्रत्ययान्तरम्, तेन यदुपपदं निर्दिश्यते तदमैव तुल्यविधानम्, तस्यैव समासो यथा स्यादित्येवमर्थमेवकारकरणमुपपदविशेषणार्थं क्रियते । स च समासः प्रत्यासत्तेरमैव भवति, न प्रत्यान्तरेणेति विज्ञायते । **अग्रे भुक्त्वा, अग्रे भोजमिति** । अत्राग्रेशब्द उपपदम् 'विभाषाग्रेप्रथमपूर्वेषु' इत्यमा क्त्वाप्रत्ययेन च तुल्यविधानमिति न समस्यते । अव्ययग्रहणं स्पष्टार्थम् । न ह्यनव्ययममन्तमस्ति यन्निवृत्त्यर्थमव्ययग्रहणमर्थवद्भवति ॥

**तृतीयाप्रभृतीन्यन्यतरस्याम्** ॥ **पर्याप्तो भोक्तुमिति** । 'पर्याप्तिवचनेष्वलमर्थेषु' इत्यत्र 'शकधृषज्ञाग्लाघटरभ' इत्यादेः सूत्रात् तुमुन्ग्रहणानुवृत्तेस्तुमुन्प्रत्ययः ॥

उभयत्रविभाषेयम्। यदमैव तुल्यविधानमुपपदं तस्य प्राप्ते, यथा—'उपदंशस्तृतीयायाम्' इति। यत्पुनरमा चान्येन च तुल्यविधानं तस्याप्राप्ते, यथा—'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' इति, मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं भुङ्क्ते। उच्चैःकारमाचष्टे। उच्चैः कारम्।

अमैवेत्येव—'पर्याप्तिवचनेष्वलमर्थेषु', पर्याप्तो भोक्तुम्। प्रभुर्भोक्तुम्॥

## क्त्वा च॥ २२॥

'अमैव' इति पूर्वयोगेऽनुवृत्तम्, तेनान्यत्र न प्राप्नोतीति वचनमारभ्यते। क्त्वाप्रत्ययेन सह तृतीयाप्रभृतीन्युपपदानि अन्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति। उच्चैःकृत्य। उच्चैः कृत्वा। 'अव्ययेऽयथाभिप्रेताख्याने' इति क्त्वाप्रत्ययः। समासपक्षे ल्यबेव। तृतीयाप्रभृतीनीत्येव—अलं कृत्वा। खलु कृत्वा॥

## शेषो बहुव्रीहिः॥ २३॥

उपर्युक्तादन्यः शेषः। शेषः समासो बहुव्रीहिसंज्ञो भवति। कश्च

पदमञ्जरी

*इति*। उपपदविशेषणार्थं एवकारोऽत्र नानुवर्त्तत इति भावः। *उच्चैःकारमिति*। यदा समासस्तदा कृदुत्तरपदप्रकृतिस्वरः, 'आदिर्णमुल्यन्यतरस्याम्' इत्याद्युदात्तत्वम्। यदा तु न समासः, तदोच्चैरित्यन्तोदात्तम्; स्वरादिषु तथा पाठात्। कारमित्याद्युदात्तम्॥

*क्त्वा च*॥ क्त्वेति तृतीयान्तम्। 'आतः' इत्याकारलोपः, यथा—'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति 'क्त्वि स्कन्दिस्यन्दोः' इति॥

*शेषो बहुव्रीहिः*॥ *उपयुक्तादन्यः शेष इति*। 'शिष असर्वोपयोगे' इत्यस्मात्कर्मणि घञ्। *कश्च शेष इति*। ननु चोपयुक्तादन्यः शेष इत्युक्तम्, सत्यम्; सर्वेषामेव पदानां सामान्यविशेषरूपेणोपयोगात्सर्वेषु च पूर्वोत्तरान्यपदार्थेषु

न्यासः

**क्त्वा च**॥ अलं कृत्वा, खलु कृत्वेति। 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा', स च तृतीयाप्रभृतिभ्यः पूर्वः॥

**शेषो बहुव्रीहिः**॥ उपर्युक्ताद् योऽन्य इति। अभिहितादन्य इत्यर्थः। यत्रान्यः

शेषः ? यत्रान्यः समासो नोक्तः। वक्ष्यति—'अनेकमन्यपदार्थे'। चित्रगुः। शबलगुः। कृष्णोत्तरासङ्गः।

शेष इति किम्? उन्मत्तगङ्गम्, लोहितगङ्गम्।

बहुव्रीहिप्रदेशाः—'न बहुव्रीहौ' इत्येवमादयः॥

**अनेकमन्यपदार्थे॥ २४॥**

अनेकं सुबन्तमन्यपदार्थे वर्तमानं सह समस्यते, बहुव्रीहिश्च

**पदमञ्जरी**

यथायोगं तत्पुरुषाव्ययीभावयोर्विधानादुपयुक्तादन्यो न सम्भवतीति पुनः प्रश्नः। उक्तं च—'शेषग्रहं पदतश्चेन्नाभावादर्थतश्चेदविशिष्टम्' इति। *यत्रान्यः समासो नोक्त इति*। येषां पदानां यस्मिन्नर्थेऽव्ययीभावादिकः समासो न विहितः स शेष इत्यर्थः। अथैवं कस्मान्न विज्ञायते—सप्तसु सुपां त्रिकेषु यस्य त्रिकस्य शृङ्गग्राहिकया समासो नोक्तः, यथा–प्रथमायाः, स शेष इति? कण्ठेकाल इत्यादावप्रथमान्तानामपि समासस्येष्टत्वात्। शेषग्रहणं प्राक्कडारात्परं कार्यमित्यस्मिन्पक्षे कर्तव्यम्, एकसंज्ञाधिकारपक्षे न कर्तव्यमित्याकडारसूत्र एव प्रतिपादितम्॥

*अनेकमन्यपदार्थे*॥ *अनेकं सुबन्तं सह समस्यत इति*। परस्परमित्यर्थः।

**न्यासः**

**समासो नोक्त इति**। यत्रान्या समाससंज्ञा न विहितेत्यर्थः। **चित्रगुरिति**। अत्र बहुव्रीहित्वे सति 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इत्येष विधिर्भवति। **उन्मत्तगङ्गमिति**। 'अन्यपदार्थे च संज्ञायाम्' इत्यव्ययीभावः। असति हि शेषग्रहण इहापि बहुव्रीहिः स्यात्। ननु च बहुव्रीहौ प्राप्तेऽव्ययीभावस्त्वारभ्यमाणस्तस्यैव बाधको भविष्यति, तत् कुतो बहुव्रीहिप्रसङ्गः? 'प्राक् कडारात् परं कार्यम्' इत्यस्मिन् पक्ष इदं प्रत्युदाहरणमुपन्यस्तम्। तत्र हि पक्षे यदि शेषग्रहणं न क्रियेत, ततः 'अन्यपदार्थे च संज्ञायाम्' इति वचनप्रामाण्यादव्ययीभावः स्यात्। परत्वाद्बहुव्रीहिरित्येके। अयं तु पक्षो **वृत्तिकारेण** नाश्रित इत्ययुक्तमेतत्। तस्माद् 'आकडारादेका संज्ञा' इत्यस्मिन् पक्षे 'व्यक्तिः पदार्थः' इत्येतद्दर्शनमाश्रित्येदं प्रत्युदाहरणमुपन्यस्तम्। व्यक्तौ हि पदार्थे प्रतिलक्ष्यं लक्षणं प्रवर्त्तते। अत्रासति शेषग्रहणे यदेतद्विषयं लक्षणं तदकृतार्थमित्यवश्यं तेन प्रवर्त्तितव्यम्। एकसंज्ञाधिकाराच्च यौगपद्यं न सम्भवतीति वचनप्रामाण्यादुभयप्रसङ्गः, उभे अपि पर्यायेण स्यातामित्यपरे॥

**अनेकमन्यपदार्थे**॥ अनेकग्रहणं सुबित्यनेन सम्बध्यते, प्रथमान्तत्वात्; न सुपेति तृतीयान्तेन। प्राप्तोदको ग्राम इत्यादीनि द्वितीयादिविभक्त्यर्थेषु यथाक्रमं बहुव्रीहेरुदाहरणानि।

समासो भवति । प्रथमार्थमेकं वर्जयित्वा सर्वेषु विभक्त्यर्थेषु बहुव्रीहिर्भवति । प्राप्तमुदकं यं ग्रामं प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् ।

पदमञ्जरी

तदनेन सुबित्येतदत्रानुवर्तते, न सुपेत्येतद्; उत्तरपदस्याप्यनेकमित्यनेनैव प्रतिपादितत्वादिति दर्शयति । *सर्वेषु विभक्त्यर्थेष्विति* । पदेन प्रकृत्यर्थोपसर्जनः प्रत्ययार्थोऽभिधीयत इति विभक्त्यर्थस्य प्राधान्यात्तस्यैवान्यपदार्थग्रहणेन ग्रहणमिति भावः । अत एव प्राप्तोदकोऽयं ग्राम इति ग्रामशब्दानुप्रयोगः, अन्यथा यावानेवार्थो ग्रामपदस्य तावतोऽभिधाने गतार्थत्वान्न स्यात्, यथा—द्वन्द्वे च-शब्दस्य । यदा तु समासेन विभक्त्यर्थ एव सम्बन्धादिरभीप्स्यते तदा विभक्तिर्मानुप्रयोजि, द्रव्यस्यानभिहितत्वात्तद्वाचिनोऽनुप्रयोगः कस्मान्न स्यात् यदि विभक्त्यर्थोऽभिधीयते, कथं ग्रामादिभिः सामानाधिकरण्यं तल्लिङ्गसंख्यायोगे वा बहुव्रीहिर्भवति—प्राप्तोदको ग्रामः, उद्धृतौदना स्थालीति ? उच्यते—विभक्त्यर्थस्य सम्बन्धादेराश्रितत्वेन गुणत्वादभेदोपचारात्सामानाधिकरण्यमाश्रयतश्च लिङ्गवचनानि भविष्यन्ति शुक्लादिवत्, यथा—शुक्लं वस्त्रम्, शुक्ला पटी, शुक्लः कम्बलः, शुक्लैः, शुक्ला इति । नन्वेवं यथा शुक्लशब्देन कदाचिद्गुण उच्यते, कदाचित् गुणी; तथा बहुव्रीहावपि प्राप्नोति । नैषोऽस्ति नियमः—गुणशब्देन कदाचिद्गुणमात्रमभिधीयत इति, पट्वादिष्वदर्शनात्, न हि भवति देवदत्तस्य पटुरिति; तद्वदिहापि नित्यमेव गुणिनिष्ठता भविष्यति । एवमपि बहुव्रीहिणा यथा विभक्त्यर्थस्याभिधानात् षष्ठ्यादयो न भवन्ति, तथा लिङ्गसंख्ययोरप्यभिधानात्तयोर्वाचकाः प्रत्यया न प्राप्नुवन्ति ? नैष दोषः; स्वार्थिकाष्टाबादयः, स्त्रियां यद्वर्तते तस्मात्स्वार्थिकाष्टाबादयो भवन्तीति तेन बहुव्रीहिणाऽभिहितेऽपि स्त्रीत्वे भविष्यन्ति । एवं च कृत्वा 'अनो बहुव्रीहेः' इत्याद्युपपन्नं भवति । समासेन च बाह्यक्रियापेक्षा या कर्मादिशक्तिस्तद्रहितसमासप्रातिपदिकार्थमात्रस्यैवैकत्वादेरुक्तत्वादिति कर्मादिगतैकत्वादिप्रतिपादनाय वचनानि भविष्यन्ति—चित्रगुं पश्य, चित्रगुणा कृतमिति । एवमपि प्रथमा न प्राप्नोति, समासेन संख्याया अभिधानात् ? वचनग्रहणादेकः, द्वौ, बहव इतिवद्भविष्यति । अथ वा—लिङ्गमात्रं संख्यामात्रं बहुव्रीहिणाभिहितं न विशेषस्तत्रावश्यं विशेषार्थिना तद्वाची शब्दः प्रयोक्तव्यः, एवं च कृत्वा सह प्रकृत्यर्थेन विभक्त्यर्थे बहुव्रीहिणाभिधीयमानेऽपि न कश्चिद्दोषः । कथं सामान्यमनभिहितं विशेषस्यानुप्रयोगः ? सामान्यस्य तर्हि न प्राप्नोति—देवदत्तः कश्चिदिति, सामान्यमपि विशेषः, यथा विशेषेण विशेषान्तरं व्यावर्त्यते तद्वत्सामान्येन विशेषो व्यावर्त्यते, अन्यथा सन्देहः स्यात्—सामान्यमत्र विवक्षितम् ? विशेषो वा ? इति ।

*प्राप्तोदको ग्राम* इत्यादीनि द्वितीयाद्यर्थेषु यथाक्रममुदाहरणानि । ऊढो रथो

उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । चित्रगुर्देवदत्तः । वीरपुरुषको ग्रामः ।

प्रथमार्थे तु न भवति । वृष्टे देवे गतः ।

अनेकग्रहणं किम् ? बहूनामपि यथा स्यात्—

सुसूक्ष्मजटकेशेन सुगजाजिनवाससा ।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति ॥

पदमञ्जरी

येन, उपहृतः पशुर्यस्मै, उद्धृत ओदनो यस्याः, चित्रा गावो यस्य, वीराः पुरुषा यस्मिन्निति विग्रहाः । *प्रथमार्थे तु न भवतीति* । अनभिधानात्, एवमनन्तरादिषु न भवति—चित्रा गावो यस्यानन्तरा इति । *अनेकमिति किमिति* । सुप्सुपेत्यधिकारादेव तत्पुरुषवद्बहुव्रीहिरप्येकस्य न भविष्यतीति प्रश्नः । *बहूनामपि यथा स्यादिति* । अन्यथा सुप्सुपेति संख्याया विवक्षितत्वाद्यथा तत्पुरुषो बहूनां न भवति—महत्कष्टं श्रित इति, तथा बहुव्रीहिरपि न स्यादिति भावः । ज्ञापकात्सिद्धम्, यदयं तद्धितार्थेत्युत्तरपदे द्विगुं शास्ति तज्ज्ञापयति—बहूनामपि समास इति । यद्येवम्, तत्पुरुषेऽपि प्रसङ्गः, अथ चित्रगुरित्यत्रोत्तरपदस्याप्युपसर्जनसंज्ञा प्रयोजनं कस्मान्न भवति, सत्यनेकग्रहणे सुपेत्यस्य निवर्तितत्वादुत्तरपदमपि तेनैव प्रत्याय्यते, तदपि समासशास्त्रे प्रथमानिर्दिष्टं भवति, नान्यथा ? एवं मन्यते—चित्रगुस्तिष्ठति, चित्रगुं पश्येति प्रधानस्यान्यपदार्थस्य नानाविभक्तियोगेऽपि वर्त्तिपदयोर्नित्यप्रथमान्तत्वादेकविभक्तीत्येव सिद्धमुपसर्जनत्वमिति ।

*सुसूक्ष्मजटकेशेनेति* । सुष्ठु सूक्ष्मा जटाः केशा अस्येति चतुर्णां बहुव्रीहौ 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति बहुलवचनाद्ह्रस्वत्वम्, यद्वा सुष्ठु सूक्ष्मा जटा येषु ते सुसूक्ष्मजटास्तादृशाः केशा अस्येति पुनर्बहुव्रीहिः । एवं सुष्ठु गजाजिनं

न्यासः

प्रथमार्थे तु न भवतीति । अनभिधानात् । नहि वृष्टे देवे गत इति वाक्याद् योऽर्थः प्रतीयते, स वृष्टदेवशब्दात् प्रतीयते ।

अनेकग्रहणं किमिति । एवं मन्यते—अनेकग्रहणमित्येकस्य मा भूदित्येवमर्थं स्यात्, एतच्चायुक्तम्; यथैव हि 'सुप्सुपा' इत्यधिकारात् समर्थपरिभाषोपस्थानाच्च तत्पुरुष एकस्य न सम्भवति, तथा बहुव्रीहिरपि न भविष्यतीति किमर्थमनेकग्रहणमित्याह—बहूनामपि यथा स्यादिति । 'सुप्सुपा' इत्यधिकारात् समर्थपरिभाषोपस्थानाच्चानेकस्यैव समासे लब्धे सत्यनेकग्रहणं प्रचुरतरार्थं विज्ञायते, तेन बहूनामपि भवति । चित्रग्वादेः सकाशात् सुसूक्ष्मजटकेशादिषु प्रचुराणि पदानि भवन्ति । अथान्यपदार्थग्रहणं किमर्थम् ? बहुव्रीहितत्पुरुषयोर्विषयविभागार्थम् । अविशेषेण तत्पुरुष उच्यमानोऽनन्यपदार्थे

* बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम् *। व्यधिकरणानां मा भूत्—पञ्चभिर्भुक्तमस्य ।

* अव्ययानां च बहुव्रीहिर्वक्तव्यः * । उच्चैर्मुखः । नीचैर्मुखः ।

पदमञ्जरी

वास आच्छादनं यस्य तेन सुगजाजिनवाससा, तृतीयान्तोदाहरणम्; श्लोके तथा पठितत्वात् ।

'सुसूक्ष्मजटकेशेन सुगजाजिनवाससा ।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिद्धचति' ॥

इति भाष्ये श्लोकः पठितः, तत्र तु श्लोकपूरणार्थं तृतीयानिर्देशः । अन्यग्रहणं बहुव्रीहितत्पुरुषयोर्विषयविभागार्थम्, असति तस्मिन् कण्ठेकाल इत्यादौ व्यधिकरणपदे सावकाशं बहुव्रीहिं स्वपदार्थ इव नीलोत्पलं सर इत्यादौ समानाधिकरणे तत्पुरुषो बाधेत । अन्यग्रहणे तु सति स्वपदार्थे सावकाशं तत्पुरुषं परत्वाद्बहुव्रीहिर्बाधत इति न कश्चिद्दोषः ।

पदग्रहणं किम् ? पदार्थे यथा स्याद्वाक्यार्थे मा भूत् । कश्चित्कञ्चिन्नद्यां सिष्णासुमाह—नद्यां ग्राहाः सन्तीति, एतानि पदानि 'तस्मात्तत्र मा स्नासीः' इति वाक्यार्थं गमयन्तीति तेषां बहुव्रीहिसंज्ञा प्राप्नोति । अर्थग्रहणं किम्, यावता पदे पदान्तरस्य वृत्त्यसम्भवादेव पदार्थे भविष्यति ? कृत्स्ने पदार्थे यथा स्यात्, अन्यथा प्राधान्याद्विभक्त्यर्थ एव स्यान्न प्रकृत्यर्थे द्रव्ये । तत्र यदुक्तम्—अभेदोपचाराद्धर्मिणोऽभिधाने सिद्धेऽपि शुक्लादिवद्धर्ममात्रस्यापि कदाचिदभिधानं प्राप्नोति, तदनेनापाक्रियते । पट्वादिशब्दवन्नित्यं धर्मिनिष्ठो बहुव्रीहिरिति प्रतिपादनेन बहुव्रीहिः समानाधिकरणानामित्यादिरभिधानसिद्धस्यार्थस्य प्रपञ्चः ।

उच्चैर्मुख इति । उच्चैसोऽधिकरणप्रधानत्वाद्वैयधिकरण्याद्वचनम् ।

न्यासः

कृतावकाशोऽन्यपदार्थे परत्वाद्बहुव्रीहिणा यथा बाध्येत—वीरपुरुषको ग्रामः, चित्रगुर्देवदत्त इति ।

बहुव्रीहिः समानाधिकरणानामित्यादि । समानाधिकरणानां पदानां बहुव्रीहिर्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । किमर्थमिदमित्याह—व्यधिकरणानां मा भूदिति । तत्रेदं व्याख्यानम्—अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्ति, न च व्यधिकरणानां बहुव्रीहौ कृते विवक्षितार्थाभिधानमस्ति, न हि पञ्चभिर्भुक्तमस्येति वाक्याद् योऽर्थः प्रतीयते स पञ्चभुक्तशब्दात् । तस्मादनभिधानाद्व्यधिकरणानां बहुव्रीहिर्न भविष्यति । यत्र त्वभिधानमस्ति तत्र वैयधिकरण्येऽपि भवत्येव समासः—कण्ठेकाल इति ।

अव्ययानाञ्चेति । बहुव्रीहिर्भवतीति सम्बन्धनीयम् । चकारादन्यानाञ्च क्वचित् । असमानाधिकरणार्थमिदम् । उच्चैर्मुखमिति । उच्चैःशब्दस्याव्ययस्यासत्त्ववाचित्वात्

* सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च वक्तव्यः * । कण्ठे स्थितः कालोऽस्य कण्ठेकालः । उरसिलोमा । उष्ट्रस्य मुखमिव मुखं यस्य स उष्ट्रमुखः । खरमुखः ।

* समुदायविकारषष्ठ्याश्च बहुव्रीहिरुत्तरपदलोपश्चेति वक्त-

पदमञ्जरी

*सप्तम्युपमानेति* । सप्तम्यन्तमुपमानवाचि च पूर्वपदं यस्य तस्य शब्दान्तरेण समासस्तत्रस्थस्योत्तरपदस्य लोप इत्यर्थः । *कण्ठेस्थ इति* । 'सुपि स्थः' इति कः । 'अमूर्धमस्तकात्' इत्यलुक् । *कण्ठेस्थित इति* पाठे तु सप्तमीति योगविभागात्समासः । समानाधिकरणत्वात्समासे सिद्धे वचनमुत्तरपदलोपार्थम्, तेन वैयधिकरण्येऽप्यत्र गमकत्वमस्तीति प्रदर्श्यते । *उष्ट्रमुखमिवेति* । अवयवधर्मेण समुदायव्यपदेशादुष्ट्रस्योपमानतेत्युपमानपूर्वपदमुष्ट्रमुखशब्दः, अत्रोपमानोपमेययोर्वैयधिकरण्यवद्वचनमुत्तरपदलोपार्थं च । *उष्ट्रमुख इति* । उष्ट्रो मुखमस्येति विग्रहः, न च प्राणी प्राण्यन्तरस्य मुखमुपपद्यत इति सामर्थ्यात् सादृश्यावगतिः, मुखेन च मुखस्य सादृश्यं प्रसिद्धमित्युष्ट्रमुखमिव मुखमस्येत्ययमर्थो भवति । तस्मादुत्तरपदलोपो न वक्तव्यः ।

*समुदायविकारषष्ठ्या इति* । समुदायावयवसंबन्धे प्रकृतिविकारसंबन्धे च या

न्यासः

सत्त्ववाचिना मुखशब्देन नास्ति सामानाधिकरण्यम्, तथापि गमकत्वात् समासो भवत्येव । अनव्ययानामुदाहरणम्—कण्ठे स्थितः कालो यस्येति स कण्ठेकाल इत्येवमादि । कथं पुनस्तुल्येऽपि वैयधिकरण्ये पदानां क्वचिद्बहुव्रीहेर्गमकत्वं भवति ? क्वचिन्न भवतीति ? शब्दशक्तिस्वभावात् । शब्दशक्तयश्च प्रतिनियताश्रयाः क्वचिदेव प्रवर्त्तन्ते; न सर्वत्र ।

**सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्चेति** । सप्तम्यन्तं पूर्वपदं यस्योत्तरपदस्य तत् सप्तमीपूर्वपदम् । तस्य परेण पदान्तरेण समासो भवति । तस्य च सप्तम्यन्तपूर्वपदस्योत्तरपदलोपो भवति । कण्ठे स्थित इति विगृह्य 'सप्तमी' इति योगविभागात् समासः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । कण्ठेस्थितः कालोऽस्येति कण्ठेकालः । अत्र सप्तम्यन्तपूर्वपदस्य समानाधिकरणत्वात् सिद्ध एव बहुव्रीहिः । उत्तरपदलोपस्तु विधीयते । एवमन्यत्रापि वेदितव्यम् । उपमानं पूर्वपदं यस्योत्तरपदस्य तत् पदान्तरेण समस्यते । तस्योपमानपूर्वपदस्योत्तरपदलोपो विधीयते । उष्ट्रमुखमिव मुखमस्योष्ट्रमुखः, खरमुखः । अत्रोष्ट्र उपमानं पूर्वपदं मुखस्य । ननु चोष्ट्रमुखमुपमानं देवदत्तमुखस्य, न तूष्ट्रः ? उपमानावयवत्वादुष्ट्रोऽप्युपमानमुच्यत इत्यदोषः ।

**समुदायविकारषष्ठ्याश्चेति** । उत्तरपदलोपश्चेत्यनुवर्त्तते । समुदायषष्ठ्यन्ताद्

व्यम् * । केशानां संघातः, केशसंघातः, केशसंघातः = चूडाऽस्य केशचूडः । सुवर्णस्य विकारोऽलंकारोऽस्य सुवर्णालंकारः ।

* प्रादिभ्यो धातुजस्योत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्यः *।
प्रपतितं पर्णमस्य प्रपर्णः, प्रपतितपर्णः । प्रपतितं पलाशमस्य प्रपलाशः ।

* नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च वक्तव्यः * ।
अविद्यमानः पुत्रो यस्य अपुत्रः । अविद्यमानभार्यः अभार्यः ।

* सुबधिकारेऽस्तिक्षीरादीनां बहुव्रीहिर्वक्तव्यः * । अस्तिक्षीरा ब्राह्मणी । अस्त्यादयो निपाताः ॥

पदमञ्जरी

षष्ठी तदन्तात्परं यदुत्तरपदं तदन्तस्य समासस्य शब्दान्तरेण सह बहुव्रीहिरित्यर्थः। *केशचूड इति* । इदमपि केशसमाहारे केशशब्दस्य वृत्तेः सिद्धम् । एवं स्वर्णविकारे स्वर्णशब्दस्य वृत्तेः स्वर्णालङ्कार इति सिद्धम् । वचनं तु केशसमाहारचूडः, स्वर्णविकारालङ्कार इत्युत्तरपदस्य श्रवणं मा भूदिति ।

*प्रादिभ्यो धातुजस्येति* । इदं न वक्तव्यमेव, प्रादयो हि ससाधनां क्रियां प्राहुः—यथा निष्कौशाम्बिः, निर्वाराणसिः, प्राचार्य इति । एवं नञोऽस्त्यर्थानामित्येतदपि ।

*सुबधिकार इति* । अस्तीति तिङन्तमिति मत्वा वचनं निपातत्वात्सिद्धम् । उपसर्गविभक्तिप्रतिरूपका निपाताः, स्वरादिषु चास्तिशब्दः पठ्यते । इह किं सब्रह्मचारीति ? बहुव्रीहिरयम् । के सब्रह्मचारिणस्तव, किं सब्रह्मचारी त्वमिति

न्यासः

विकारषष्ठ्यन्ताच्च पूर्वपदात् परं यदुत्तरपदं तत् परं पदान्तरेण समस्यते । तस्य च समुदायविकारषष्ठ्यन्तपूर्वपदस्योत्तरपदस्य लोपो भवति । केशानां संघातः केशसंघातः, स चूडास्येति केशचूड इत्यत्र समुदायसमुदायिसम्बन्धे षष्ठी । सुवर्णस्य विकारोऽलङ्कारोऽस्येत्यत्र विकारविकारिसम्बन्धे षष्ठी ।

प्रादिभ्य इत्यादि । उत्तरपदलोपश्चेत्यनुवर्त्तते । धातोर्जातं निष्पन्नं धातुजम् । प्रादिभ्यः पूर्वपदेभ्यः परं यद्धातुजमुत्तरपदं पतितशब्दादि तदन्तस्य बहुव्रीहिर्भवति । तस्य चोत्तरपदस्य वा लोपः ।

नञोऽस्त्यर्थानामित्यादि । नञ उत्तरेषां विद्यमानादीनामित्यर्थः ।

इह सुबिति वर्त्तते, अस्तिशब्दश्चायं तिङन्तः, अस्तिक्षीरेत्येवमादि न सिध्यतीति यो मन्येत तं प्रत्याह—सुबधिकार इति । अस्तिक्षीरादेः समास उच्यते — प्रतिपाद्यते.

संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये ॥ २५ ॥

संख्येये या संख्या वर्त्तते तया सहाव्ययासन्नादूराधिकसंख्याः समस्यन्ते, बहुव्रीहिश्च समासो भवति। अव्यय—उपदशाः। उपविंशाः। आसन्नदशाः। आसन्नविंशाः। अदूरदशाः। अदूरविंशाः।

पदमञ्जरी

पूर्वपदप्रकृतिस्वरो ह्यत्रेष्यते, तत्र कठसब्रह्मचार्यहमिति सम्भावितम्प्रतिवचनम्। यत्तु कठोऽहमिति न तत्साक्षात्प्रतिवचनम्, किं तर्हि? आर्थिकम्। अहं तावत्कठ इत्युक्ते गम्यत एतन्नतु तेऽपि कठा इति। कठस्य हि कठा एव सब्रह्मचारिणो भवन्ति, नान्ये। समाने ब्रह्मणि व्रतचार्येव सब्रह्मचारी भवति। के सब्रह्मचारिणस्तवेति वाक्येन तु प्रश्ने कठा इति प्रतिवचनम्। समासेन तु प्रश्ने कठा इति प्रतिवचनं कदाचिदपि न भवति; वृत्तिपदार्थानामुपसर्जनत्वात्, किं सब्रह्मचारीति समासेन सब्रह्मचारिणामभिधानात्। इह द्वौ द्रोणावर्द्धद्रोणाश्चार्द्धतृतीया द्रोणा इति? अर्द्धस्तृतीयो येषामिति बहुव्रीहावुद्भूतावयवभेदः समुदायः समासार्थ इति बहुवचनं द्रोणशब्दश्च द्रोणयोरर्द्धद्रोणेऽपि लक्षणया वर्त्तत इति सामानाधिकरण्यं च भवति ॥

*संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये* ॥ *उपदशा इति*। 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डचि टिलोपः, दशानां समीपे ये भवन्ति त उच्यन्ते, ते पुनर्नवैकादश वा। पूर्वपदार्थप्रधानोऽयं समासः। उपशब्दोऽयमाराच्छब्देनैकार्थत्वात्समीपे समीपिनि च वर्त्तते। तत्र समीपिप्राधान्येऽयं बहुव्रीहिः। सामीप्यप्राधान्ये 'अव्ययं विभक्तिसमीप' इत्यव्ययीभावः। *उपदशं दन्तोष्ठा इति*। अत्र धर्मधर्मिणोरभेदोपचारात्सामानाधिकरण्यम्। *उपविंशा इति*। 'ति विंशतेर्डिति' इति

न्यासः

येन तदस्तिक्षीरादेर्वचनम्। व्याख्यानं कर्त्तव्यमित्यर्थः। तत्रेदं व्याख्यानम्—'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्ति' इति विभक्तिप्रतिरूपकोऽयमस्तिशब्दो निपातः, न तिङन्त। तेनास्तिक्षीरा ब्राह्मणीत्यादि सिद्धं भवति ॥

संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये ॥ उपदशा इति। 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डच् समासान्तः, टिलोपश्च। दशानां समीपे ये वर्त्तन्ते ते तथोच्यन्ते, ते पुनर्नवैकादश वा। पूर्वपदार्थप्रधानोऽयं समासः। यद्येवम्, कस्तर्ह्यव्ययीभावस्यास्य च विषयविभागः, सोऽप्यव्ययीभावोऽव्ययस्य समीपे वर्त्तमानस्य 'अव्ययं विभक्ति' इत्यादिना पूर्वपदार्थप्रधान एव विधीयते? उच्यते—यदा समीपिनः प्राधान्यं तदा बहुव्रीहिः, यदा तु समीपस्य प्राधान्यं तदाव्ययीभावः—इत्येष विषयविभागः। उपविंशा इति। पूर्ववड् डच्। 'ति विंशतेर्डिति' इति टिलोपः। आसन्नदशा

अधिकदशाः । अधिकविंशाः । संख्या—द्वित्राः । त्रिचतुराः । द्विदशाः ।

संख्ययेति किम् ? पञ्च ब्राह्मणाः । अव्ययासन्नादूराधिकसंख्या

पदमञ्जरी

लोपः । आसन्ना दशानामासन्नदशाः, तेऽपि नवैकादश वा । अधिकदशास्त्वेकादश । द्वौ वा त्रयो वा द्वित्राः, वार्थेऽयं समासः । वार्थश्च यदि विकल्पः स्यात्, ततो यदि द्वौ भवतस्तदा बहुवचनं न स्यात् । तस्मात्संशयोऽत्र वार्थः, स चानियतसंख्याविमर्शः, तत्र तु त्रयोऽपि सर्वदा परिस्फुरन्तीति तदपेक्षं बहुवचनम् । अथ वा—पञ्चैवात्र सर्वदा भवन्ति, कथम् ? विमर्शज्ञानमुभयपक्षालम्बि एकं च तत्र, यथा—द्वौ वा त्रयो वा पुरुषा आनीयन्तामित्यत्र पुरुषशब्दे तिङन्ते च बहुवचनमेव भवति, कस्य हेतोः ? मिश्रितेषु तयोर्वृत्तेः । एवं द्वित्रिपदमपि मिश्रितेषु वर्तत इति सैषा पञ्चाधिष्ठाना वाक्, अतो बहुवचनमेव भवति । आनयनादिकार्यं तु द्वयोस्त्रयाणां वा यथारुचि भवति । वाक्यवदेव समासस्य चैषा हि आपत्, अतस्तेषु मिश्रितेषु वृत्तिः, तेन द्वौ वा पुरुषा आनीयन्तामिति वाक्ये द्विशब्दाद् द्विवचनमेव भवति । *त्रिचतुरा इति* । 'चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम्' इत्यच् । *द्विदशा इति* । अत्र द्विशब्देन दशत्वावृत्तिगता द्वित्वसंख्या प्रतिपाद्यते, न दशत्वसंख्या; एकत्वात् । नापि संख्यायुक्ताः, बहुत्वात् । तत्र वाक्ये सुचमन्तरेणाभ्या-

न्यासः

इति । दशानामासन्ना आसन्नदशाः । ते च पूर्ववन्नवैकादश वा । अदूरदशा इति । दशानामदूरा ये, ते पुनः पूर्वोक्ता एव । अधिकदशा इति । दशानामधिकाः, ते पुनरेकादशादयः । द्वित्रा इति । द्वौ वा त्रयो वेति विग्रहः । वार्थे चायं समासः । वार्थश्चायं संशयः, न विकल्पः । यदि वार्थ इह विकल्प आश्रीयते ततो यदा द्वौ भवतः, तदा बहुवचनं न स्यात् । तस्मात् संशयोऽत्र वार्थः । संशयिते वार्थे बहुवचनं भवति, यथा—कति भवतः पुत्राः । उक्तञ्च भाष्ये—'अविज्ञातेऽर्थे बहुवचनं प्रयोक्तव्यम्' इति, तत् कथम् ? संशयज्ञानस्योभयपक्षपरामर्शित्वेन बह्वर्थविषयत्वात् । उभयपक्षापरामर्शत्वेन संशय एव न स्यात् । अथ वा—पञ्चैवात्र सदा भवन्ति, न कदाचिद् द्वौ त्रयो वेति । तथा च 'द्वित्रा' इत्युक्ते पञ्चेवेति गम्यते। सैषा पञ्चाधिष्ठाना वागिति ततो युक्तं बहुवचनम् । यदि तर्हि वार्थेऽयं समासः, तस्यार्थस्यान्यपदार्थत्वात् पूर्वेणैव सिद्धः समासः ? न सिध्यति, मत्वर्थे हि पूर्वयोगः; अमत्वर्थार्थोऽयं योगः । अथ वा—प्रथमार्थं वर्जयित्वाऽन्यत्र विभक्त्यर्थे पूर्वेण समासः । प्रथमार्थमिदं वचनम् । त्रिचतुरा इति । 'चतुरोऽच्प्रकरणे चतुरस्त्र्युपाभ्यामुपसंख्यानम्' इत्यच् समासान्तः । द्विदशा इति । द्विर्दशेति विग्रहः । सुजर्थेऽयं समासः । दशसम्बन्धिनी याऽऽवृत्तिर्दश-

इति किम् ? ब्राह्मणाः पञ्च । संख्येये इति किम् ? अधिका विंशतिर्गवाम् ॥

दिङ्नामान्यन्तराले ॥ २६ ॥

दिशां नामानि = दिङ्नामानि । दिङ्नामानि सुबन्तानि अन्तराले वाच्ये समस्यन्ते, बहुव्रीहिश्च समासो भवति । दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालम् दक्षिणपूर्वा दिक् । पूर्वोत्तरा । उत्तरपश्चिमा । पश्चिमदक्षिणा ॥

पदमञ्जरी

वृत्तेरनवगमात्सुच् भवति, ततश्चास्वपदविग्रहः क्रियते—द्विर्दश द्विदशा इति । वृत्तौ तु स्वभावादेव सुचमन्तरेणाभ्यावृत्तिसंख्यां द्विशब्द एवाहेति संख्यावाचित्वात्समस्यते ।

नन्वत्र वार्थः सुजर्थश्चान्यपदार्थे इति पूर्वेणैव सिद्धम्, तन्न; सुचः स्वार्थिकत्वात्तदर्थोऽपि पदार्थ एव । मत्वर्थे पूर्वयोगः; अमत्वर्थार्थोऽयमारम्भः । ननु प्राप्तोदकादि प्रथमार्थं वर्जयित्वा सर्वविभक्त्यर्थेषु यथाभिधानं भवतीत्युक्तम्, एवं तर्हि प्रथमार्थेऽपि यथा स्यादित्ययमारम्भः । अथ प्रथमार्थं वर्जयित्वेत्येतदनादृत्य यथाभिधानं भवतीत्युच्यते, एवं तर्हि तस्यैव प्रपञ्चः संख्यायाः समासः, अव्ययानां तु चतुर्दशादिभिः संख्येयवाचिभिः समासो विधेय एव । केचित्तु ये विंशत्यादयः संख्याने वर्त्तन्ते तैः पूर्वेणैव सिद्धम्—अधिका विंशतिर्येषां त इमेऽधिकविंशाः, विंशतिसंख्या आसन्ना येषां ते आसन्नविंशा इति, तत्र 'सर्वनामसंख्ययोः' इति विंशतिशब्दस्य पूर्वनिपातः प्राप्नोति, तस्माद्विंशत्याद्यर्थमप्यव्ययादीनां ग्रहणं कर्तव्यमेव ॥

*दिङ्नामान्यन्तराले ॥ दक्षिणपूर्वेति* । अन्तरालस्यान्यपदार्थत्वात्पूर्वेणैव सिद्धे

न्यासः

शब्देन लक्ष्यमाणा सा द्विशब्देनाख्यायते । सुजर्थश्च प्रत्ययार्थो नान्यपदार्थ इति पूर्वेण न सिद्ध्यति । अथ वा—प्रथमार्थेऽपि चायम्, अमत्वर्थेऽपि; अतः पूर्वेण न सिद्ध्यति । समास एव सुजर्थं गमयितुं समर्थ इति वृत्तौ सुज् न प्रयुज्यते ।

अधिका विंशतिर्गवामिति । विंशतिशब्दोऽत्र संख्यान एव वर्त्तते, न तु संख्येये द्रव्ये ॥

दिङ्नामान्यन्तराले ॥ दक्षिणपूर्वेति । प्रथमार्थेऽप्ययं समास इष्यते, अमत्वर्थेऽपि तत्पूर्वेण न सिध्यतीत्ययममत्वर्थ आरम्भः, प्रतिपदविधानार्थश्च । 'विभाषा दिक्समासे' इत्यत्र दिशां यः समासः प्रतिपदविहितस्तस्य ग्रहणमिष्यते । प्रतिपदविहितश्च

* सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः *। नामग्रहणं रूढ्यर्थम्, इह मा भूत्—ऐन्द्र्याश्च कौबेर्याश्च दिशोर्यदन्तरालमिति ॥

तत्र तेनेदमिति सरूपे ॥ २७ ॥

'तत्र' इति सप्तम्यन्तं गृह्यते। 'तेन' इति तृतीयान्तम्। सरूपग्रहणं प्रत्येकमभिसम्बध्यते। तत्रेति सप्तम्यन्ते सरूपे पदे तेनेति च तृतीयान्ते इदमित्येतस्मिन्नर्थे समस्येते, बहुव्रीहिश्च समासो भवति। इतिकरणश्चेह विवक्षार्थो लौकिकमर्थमनुसारयति। ततो ग्रहणं प्रहरणं कर्मव्यतीहारो युद्धं च समासार्थं इति सर्वमितिकरणाल्लभ्यते।

पदमञ्जरी

वचनमिदं त्वमत्वर्थेऽपि यथा स्यात्प्रथमार्थेऽपि यथा स्याद्वैयधिकरण्येऽपि यथा स्यात्। किं च 'विभाषा दिक्समासे बहुव्रीहौ' इत्यत्र दिशां प्रतिपदोक्तस्य बहुव्रीहेर्ग्रहणं यथा स्यात्, या पूर्वा सोत्तरास्योन्मुग्धस्य तस्मै उत्तरपूर्वाय देहीत्यत्र मा भूदित्येवमर्थः। अतस्तदर्थोऽप्ययमारम्भः। कबभावार्थं च 'शेषाद्विभाषा' इत्यत्र शेषाधिकारविहितस्य बहुव्रीहेर्ग्रहणम्। 'अनेकमन्यपदार्थे' इत्यत्रैव शेषग्रहणमनुवर्त्तते, तेनात्र कम्न भवति। 'सर्वनाम्नो वृत्तिमात्रे' इति मात्रग्रहणाद् 'विभाषा दिक्समासे' इति यदा सर्वनामसंज्ञा नास्ति तदापि भवति॥

*तत्र तेनेदमिति सरूपे* ॥ *इतिकरण इत्यादि*। ततः समासाल्लौकिकस्य यदि विवक्षा भवति—एवमर्थं समासो भवति, नान्यार्थमित्येवमर्थं सूचयितुमितिशब्द इत्यर्थः, तेन किं सिद्धं भवतीत्याह—*लौकिकमर्थमिति*। कः पुनरसौ लौकिकोऽर्थ

न्यासः

समासो दिशामेव भवति यद्ययं योग आरभ्यते, नान्यथा। सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति। स पुनः 'स्त्रियाः पुंवत्' इति योगविभागेन सिध्यतीति वेदितव्यम्। नामग्रहणं रूढ्यर्थमिति। लोके ये रूढा दिक्शब्दास्तत्परिग्रहार्थमित्यर्थः। ऐन्द्र्याश्च कौबेर्याश्चेति। नेमौ रूढिशब्दौ, किं तर्हि ? यौगिकौ—इन्द्रस्येयमैन्द्री, कुबेरस्येयं कौबेरी। 'तस्येदम्' इत्यण्॥

**तत्र तेनेदमिति सरूपे**। **इतिकरण इत्यादि**। समासादभिमतेऽर्थे यदि लौकिकी विवक्षा भवति, एवं समासोऽयमिष्यते। तस्माद्विवक्षार्थमितिकरणोऽत्र क्रियते। विवक्षार्थ इतिकरणो यमर्थं प्रतिपादयति तं दर्शयितुमाह—**लौकिकमर्थमनुसारयतीति**। अनुगमयति प्रबोधयतीति यावत्। स पुनर्लौकिकोऽर्थो ग्रहणादिरिति दर्शयन्नाह—**तत इत्यादि**। यस्मादितिकरणो लौकिकमर्थमनुसारयति ततो हेतोर्ग्रहणादिरिति सर्वं

यत्तत्रेति निर्दिष्टं ग्रहणं चेत्तद्भवति, यत्तेनेति निर्दिष्टं प्रहरणं चेत्तद्भवति, यदिदमिति निर्दिष्टं युद्धं चेत्तद्भवति। केशेषुकेशेषु च गृहीत्वा इदं युद्धं वृत्तं केशाकेशि। कचाकचि। दण्डैश्च दण्डैश्च प्रहृत्य इदं युद्धं वृत्तं दण्डादण्डि। मुसलामुसलि। 'इच् कर्मव्यतीहारे' इति इच् समासान्तः, स चाव्ययम्। 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम्।

सरूपग्रहणं किम्? हलैश्च मुसलैश्च प्रहृत्य इदं युद्धं वृत्तम्॥

**तेन सहेति तुल्ययोगे॥ २८॥**

'सह' इत्येतच्छब्दरूपं तुल्ययोगे वर्तमानं 'तेन' इति तृतीयान्तेन सह

**पदमञ्जरी**

इत्याह--*ततश्चेत्यादि*। एतदेव विवृणोति---*यत्तत्रेत्यादि*। गृह्यतेऽस्मिन्निति ग्रहणम्=केशादि, प्रहरणम्=दण्डादि, कर्मव्यतीहारः=परस्परग्रहणं परस्परप्रहरणं च। *स चाव्ययमिति*। तिष्ठद्गुप्रभृतिषु पाठेनाव्ययत्वात्। नन्वत्र युद्धस्यान्यपदार्थत्वात्पूर्वेणैव सिद्धम्, न; वैयधिकरण्यादेकशेषप्रसङ्गाच्च। तथा हि---ग्रहणप्रहरणे च केशादीनां सहविवक्षितत्वादेकविभक्तित्वाच्चैकशेषः प्राप्तोऽनेन वचनेन बाध्यते। कथम्? न समूहविवक्षायां बहुव्रीहिसंज्ञा, समूहत्वेकशेषे नोपपद्यते। ननु चासत्यस्मिन्पूर्वयोगेनैव परत्वादेकशेषो बाधिष्यते? न शक्यते बाधितुम्; अन्तरङ्ग एकशेषः बहुव्रीहिश्चान्यपदार्थापेक्षत्वाद्बहिरङ्गः॥

*तेन सहेति तुल्ययोगे*॥ *तुल्ययोग इति*। तुल्ययोगः=समानसम्बन्धः। *सपुत्र इति*। 'वोपसर्जनस्य' इति सभावः। नन्वत्र पिता प्रधानमन्यपदार्थोऽभिधेयः, सत्यम्; व्यधिकरणयोः प्रथमार्थेऽपि यथा स्यादित्ययमारम्भः, कबभावार्थं च।

**न्यासः**

लभ्यते। यत्तत्रेत्यादिनाऽनन्तरोक्तमर्थं विस्पष्टीकरोति। गृह्यतेऽस्मिन्निति ग्रहणम्=केशादि। प्रहरन्त्यस्मिन्निति प्रहरणम्=मुसलादि। कर्मव्यतीहार इति परस्परग्रहणम्, परस्परप्रहरणञ्चेतिकरणादेव लभ्यत इति वेदितव्यम्। स्वरूपविधिरत्रेतिकरणादेव न भवतीति वेदितव्यम्। दण्डैश्च दण्डैश्चेति करणे तृतीया। स चाव्ययमिति। तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावः; 'अव्ययीभावश्च' इत्यव्ययसंज्ञाविधानात्। सरूपमिति। 'समानस्य ज्योतिर्जनपद' इत्यादिना सभावः॥

**तेन सहेति तुल्ययोगे॥** तुल्ययोगे वर्तमानमित्यादि। तुल्ययोगः=समानसम्बन्धः।

समस्यते, बहुव्रीहिश्च समासो भवति। सह पुत्रेणागतः सपुत्रः। सच्छात्रः। सकर्मकरः।

तुल्ययोग इति किम्? सहैव दशभिः पुत्रैर्भारं वहति गर्दभी। विद्यमानैरेव दशभिः पुत्रैर्भारं वहतीत्यर्थः। कथं सकर्मकः, सलोमकः, सपक्षक इति? न ह्यत्र तुल्ययोगो गम्यते, किं तर्हि? विद्यमानता। प्रायिकं 'तुल्ययोगे' इति विशेषणम्, अन्यत्रापि समासो दृश्यते॥

चार्थे द्वन्द्वः॥ २९॥

'अनेकम्' इति वर्तते। अनेकं सुबन्तं चार्थे वर्त्तमानं समस्यते, द्वन्द्वसंज्ञश्च समासो भवति। समुच्चयान्वाचयेतरेतरयोगसमाहारा-

पदमञ्जरी

उक्तश्चात्र कबभावः। *दशभिः पुत्रैरिति*। इत्थम्भूतेत्यर्थः। *प्रायिकमिति*। ज्ञापकात्, यदयं 'विभाषा साकाङ्क्षे' 'छन्दस्यनेकमपि साकाङ्क्षम्', 'पूर्वादिनिः', 'सपूर्वाच्च', 'सपूर्वायाः प्रथमायाः', 'विभाषा सपूर्वस्य' इति विद्यमानार्थेऽपि समासं निर्दिशति, तज्ज्ञापयति—प्रायिकं विशेषणमिति॥

*चार्थे द्वन्द्वः॥ समुच्चयेत्यादि*। यदा परस्परनिरपेक्षाः पदार्था एकस्मिन्प्रतिसम्बन्धिनि समुच्चीयन्ते तदा समुच्चयः, यथा—अहरहर्नयमानो गामश्वं पुरुषं पशुं वैवस्वतो न तृप्यति सुराया इव दुर्मदीति। दुर्मदी यथा सुराया न

न्यासः

तं यदा सहशब्दो द्योतयति तदासौ तत्र वर्त्तते। सपुत्र इति। सह पुत्रेणेति विग्रहः कर्त्तव्यः। 'सहयुक्तेऽप्रधाने' इति तृतीया। 'वोपसर्जनस्य' इति सहस्य सभावः। अत्र सपुत्र आगतो देवदत्त इति देवदत्तस्य पुत्रस्य चागमनेन तुल्यसम्बन्धः सहशब्देन द्योत्यते। अथ कथं पुनः सकर्मक इत्यादौ स्यात्? कथञ्च न स्यादित्याह—न ह्यत्रेत्यादि। प्रायिकमिति। असर्वविषयमित्यर्थः। कुतः पुनः प्रायिकत्वमस्य लभ्यते? इतिकरणात्। ननु चान्यदितिकरणस्य प्रयोजनमस्ति, किं तत्? सहशब्दः स्वरूपपदार्थको यथा गम्येत; अन्यथा ह्यर्थनिर्देशोऽयं विज्ञायेत। ततश्च साकं सार्द्धमित्यादयोऽपि समस्येरन्? नैवं ब्रूमः—इह सूत्रे य इतिकरणस्ततो लभ्यत इति, किं तर्हि? पूर्वसूत्राद् योऽनुवर्त्तते तत इति॥

चार्थे द्वन्द्वः॥ कः पुनरयं चार्थो नामेत्याह—समुच्चयाऽन्वाचयेत्यादि। समुच्चितिः—समुच्चयः। साधनमेकं क्रियां वा प्रति क्रियासाधनानामात्मरूपभेदेन चीयमानताऽनेकत्वमिति यावत्। स पुनस्तुल्यबलानामनियतक्रमयौगपद्यानामेव भवति,

पदमञ्जरी

तृप्यति तथा यमो गवादीन्नयमान इत्यर्थः। अत्र नयतिक्रियायामेकस्यां गवादीनां समुच्चयः, गम्यमानत्वाच्च च-शब्दस्याप्रयोगः। एवं राज्ञो गौश्चाश्वश्चेति द्रव्ये द्रव्ययोः, रक्तः शुक्लश्चेति द्रव्ये गुणयोः, रक्तः पटः कुण्डलं चेति गुणे द्रव्ययोः समुच्चय इत्यादि द्रष्टव्यम्। यदानेकस्य प्राधान्यात्तदनुरोधेन त्वितरदन्वाचीयते तदान्वाचयः, यथा—भिक्षामट गाञ्चानयेति। अत्र ह्यदर्शनादनानयन्नपि गामटत्येव भिक्षाम्, अनटंस्तु भिक्षां न गामानयति, अटन्नपि नान्विष्य गामानयति। इतरेतरयोगस्तु परस्परापेक्षाणामवयवभेदानुपगमेन समुदायरूपतामापन्नानामेकस्मिन्नर्थेऽन्वये सति भवति, यथा—देवदत्तयज्ञदत्ताभ्यामिदं कार्यमिति। तथैकापायेऽपि तद्भवति, उद्भूतावयवभेदत्वाच्च द्विवचनबहुवचने भवतः, तादृशानामेवावयवतिरोधानसंहतिरूपेणान्वये तत्समाहारः, यथा—छत्त्रोपानहमिति, संहतिप्रधानत्वात्त्वेकवचनम्। *तत्रेत्यादि*। स्यादेतत्—समुच्चये परस्परानपेक्षत्वेऽपि गवादीनामेकक्रियाद्वारकं सामर्थ्यं दध्योदनादिवदस्त्येवेति, तन्न युक्तम्; दध्योदनादावेकत्वात् क्रियायाः। इह तु कर्मभेदात्क्रिया भिद्यते, तथा च 'समुच्चयेऽन्यतरस्याम्' इत्यत्र भ्राष्ट्रमट मठमटेत्यादिकं कर्मभेदनिबन्धनं क्रियाभेदमाश्रित्योदाहरिष्यते। अन्वाचये त्वप्रधानमेव चार्थे वर्त्तते, न प्रधानमित्यनेकस्य पदस्य चार्थे वृत्त्यभावादपि समासाभावः। इह पटुश्चासौ खञ्जश्चेत्येकस्मिन्धर्मिण्यनेकधर्मसमुच्चयाच्चार्थसद्भावात्समानाधिकरणयोरपि द्वन्द्वसंज्ञाप्रसङ्गः, ततश्च 'द्वन्द्वे घि' इति नियमः स्यात्, विशेषणमित्यादिना तु तत्पुरुषकरणे खञ्जपटुरित्यपि सिद्धयति? नैष दोषः; एकसंज्ञाधिकाराद्विशेषविहितत्वात्तत्पुरुषसंज्ञैव भविष्यति, अन्यथा नीलं च तदुत्पलं चेत्यादावपि द्वन्द्वः स्यात्। यद्वा—'शेष' इति वर्त्तते, अतो विशेषणमित्यत्रोपयुक्तत्वान्न भविष्यति। सामानाधिकरण्याभावे तु द्वन्द्व एव—पटुखञ्जावागताविति।

न्यासः

यथा—गामश्वं पुरुषं पशुञ्चाहरहर्नयमानो वैवस्वतस्तृप्तिं नोपयातीति। अन्वाचयोऽपि यत्रैकस्य प्राधान्यम्, इतरदप्रधानम्, तदनुरोधेनान्वाचीयमानता, यथा—भो वटो भिक्षामट गाञ्चानयेति। इतरेतरयोगः समाहारश्च समुच्चयस्यैव प्रभेदः। स एव हि परस्परापेक्षाणामवयवभेदानुगत इतरेतरयोगः, यथा—देवदत्तयज्ञदत्ताभ्यामिदं कार्यं कर्त्तव्यम्। उभावपि तत्कार्यं प्रति परस्परापेक्षौ। तथा हि तदेकस्याप्यभावे न क्रियते। अवयवप्रधानश्चायमिति द्वित्वाद् द्विवचनं भवति। परस्परापेक्षाणामेव तिरोहितावयवभेदः संहतिप्रधानः समाहारः; यथा—छत्त्रोपानहमिति। अत्रापि कस्याञ्चित् क्रियायां छत्त्रादेः परस्परापेक्षत्वम्। संहतिप्रधानत्वाच्चैकवचनम्। यदि तर्हि समुच्च-

श्चार्थाः। तत्र समुच्चयान्वाचययोरसामर्थ्यान्नास्ति समासः। इतरेतरयोगे समाहारे च समासो विधीयते। प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ। धवश्च खदिरश्च पलाशश्च धवखदिरपलाशाः। वाक्च त्वक्च वाक्त्वचम्। वाग्दृषदम्।

द्वन्द्वप्रदेशाः—'द्वन्द्वे च' इत्येवमादयः॥

पदमञ्जरी

प्लक्षन्यग्रोधाविति। चशब्दस्याव्ययत्वेऽपि तदर्थे विधीयमानस्य द्वन्द्वस्य स्वभावादेव लिङ्गसंख्यायोगः। कथं पुनरत्र द्विवचनम्, यावता शब्दपौर्वापर्यादर्थाभिधानेऽपि पौर्वापर्यम्, ततश्च प्लक्षशब्दः सहार्थेन निवृत्तः न्यग्रोधशब्द उपस्थितः, एक एवार्थस्तस्यैकत्वादेकवचनमेव प्राप्नोति, तथा च 'आद्यन्तौ टकितौ' इति क्रमेण प्रतीतिमङ्गीकृत्य यथासंख्यमित्यस्य प्रवृत्तिः, न च क्रमेण द्वयोरर्थयोः प्रतीतौ द्विवचनं भवति; यथा वा वाक्ये प्लक्षश्च न्यग्रोधश्चेति, अत्र न्यग्रोधार्थप्रतीतिदशायां प्लक्षार्थस्याप्रतीतिरेव कारणम्? अस्तु तर्हि युगपदधिकरणवचने द्वन्द्वः। किमिदं युगपदधिकरणवचन इति? अधिकरणं वर्तिपदार्थः, अधिकरणे युगपद्वचनं युगपदधिकरणवचनम्, तत्र द्वन्द्वो भवति। केन पुनर्युगपद् द्वयोर्वचनम्? एकैकेन पदेन। एतदुक्तं भवति—यावतां पदानां द्वन्द्वो यदि तावतामन्योऽन्यार्थाभिधानं युगपद्भवत्येवं द्वन्द्वो भवतीति। अत्र हि द्विवचनबहुवचनान्यथानुपपत्तिरेव प्रमाणम्; विग्रहे चापि दर्शनात्। विग्रहे खल्वपि युगपद्वचनता दृश्यते—प्रमित्रयोर्वरुणयोः, द्यावाचिदस्मै पृथिवी नमेते इति; किं पुनः समासे, यत्र चान्याचान्या च शक्तिः प्रादुर्भवति! कथं पुनः प्लक्षशब्देन न्यग्रोधाभिधानम्, तेन वा तस्य? साहचर्यादिति। यद्वा तद्वा निमित्तं भवतु, यद्यपि च लोकव्य-

न्यासः

यान्वाचयावपि चार्थौ तदा तयोरपि समासः प्राप्नोतीत्यत आह—तत्रेत्यादि। समुच्चये तावत् परस्परानभिसम्बन्धा एव गवादयो नयनादिभिः सम्बध्यमानाः समुच्चीयन्त इत्यसामर्थ्यात्, सत्यपि चार्थे तस्मिन् न भवति समासः। अन्वाचयेऽप्येकं सापेक्षं नेतरत्, यथा—पूर्वोक्त उदाहरणे। तत्र हि गवानयनं भिक्षाटनमपेक्षते, न तु भिक्षाटनं गवानयनम्; विनापि तेन तदनुष्ठानात्। स यदि गां पश्यति तदा तामप्यानयति, न चेत् भिक्षामेवाटतीत्यन्यतरापेक्षारहिते चार्थे न भवति समासः। इतरेतरयोगे समाहारे च विधीयत इति। तत्र सर्वेषां सामर्थ्यस्य विद्यमानत्वात्। वाक्त्वचम्, वाग्दृषदमिति। 'द्वन्द्वाच्चुदषहान्तात् समाहारे' इति टच् समासान्तः। 'जातिरप्राणिनाम्' इत्येकवद्भावः॥

## उपसर्जनं पूर्वम् ॥ ३० ॥

'समासे' इति वर्त्तते। उपसर्जनसंज्ञकं समासे पूर्वं प्रयोक्तव्यम्। पूर्ववचनं परप्रयोगनिवृत्त्यर्थम्। अनियमो हि स्यात्। द्वितीया—

### पदमञ्जरी

ह्वारे केवलस्य प्लक्षशब्दस्य न्यग्रोधाभिधायित्वं न दृष्टं न्यग्रोधशब्दस्य वा प्लक्षाभिधायित्वम्, द्वन्द्वावयवानां त्वनेकार्थाभिधायित्वं न केवलानामित्यदोषः। नियतविषयाश्चापि शब्दार्था भवन्ति, यथा—भ्रातृशब्दस्यैकशेष एव स्वसरि वृत्ति, पुत्रशब्दस्य दुहितरि। एतेनैतदपि निरस्तम्—एकेनोक्तत्वात्तस्यार्थस्य परस्य प्रयोगो नोपपद्यत इति।

कथं द्वन्द्वावयवानामेव परस्परसन्निधानादेषा शक्तिर्वह्निसन्निधाविव घृते द्रवता, नो खलु वह्निविगतो भवति, यदि तर्हि प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थः, बहुत्वाद्बहुवचनं प्राप्नोति ? नात्र चत्वारोऽर्थाः, किं तर्हि ? याभ्यामेवात्रैको द्व्यर्थस्ताभ्यामेवापरोऽपि। स्यादेतत्—उभयोरत्र पर्यायत्वे यथा प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधाविति द्विर्वचने प्रतीतिः, एवं प्लक्षन्यग्रोधावित्यत्रापि प्राप्नोति, तन्न; युगपदुत्पादात्। तद्यथा द्वयोरक्ष्णोर्युगपद्विस्फारितयोः पुरोवर्त्तिन्यर्थद्वये युगपदेका प्रतीतिर्जन्यते तथेहापि द्रष्टव्यम्। ननु यदा प्लक्षशब्दो न तदा न्यग्रोधशब्दः, यदा न्यग्रोधशब्दो न तदा प्लक्षशब्द इति कथमत्र युगपद्व्यापारः ? स्मृतिस्थयोर्युगपद्व्यापाराददोषः। पदानि हि श्रुतमात्राणि स्वं स्वमर्थं स्मारयन्ति, पश्चादाकाङ्क्षासन्निधियोग्यत्वेषु परामृष्टेषु स्मृतिस्थान्यभिदधति, तस्यामेव स्मृतौ युगपदारोहात्सम्भवत्येव युगपद्व्यापारः। या च सा पदार्थानां स्मृतिः सा क्रमभाविनीति तत्क्रमेणैव यथासंख्यादिव्यवस्था युगपदभिधानेऽप्युपपद्यते। तदेवं युगपदधिकरणवचने द्वन्द्व इति स्थितम्। इहैकविंशतिर्द्वाविंशतिरिति, यद्ययं द्वन्द्वः स्याद् एकं च विंशतिश्चेतीतरेतरयोगे द्विवचनबहुवचनप्रसङ्गः, समाहारे च 'स नपुंसकम्' इति नपुंसकप्रसङ्गः, अत एव एकाधिका विंशतिरेकविंशतिरिति शाकपार्थिवादित्वात्समासः क्रियते ? नैवं शक्यम्, 'राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु संख्या' इति पूर्वपदप्रकृतिस्वरो न स्यात्। तस्माद् द्वन्द्व एवायम्। स समाहारे नेतरेतरयोगे, अनभिधानात्। नपुंसकत्वन्तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति न भवति॥

उपसर्जनं पूर्वम् ॥ *अनियमो हि स्यादिति*। यद्यपि विपरीतप्रयोगो लोके

### न्यासः

उपसर्जनं पूर्वम् ॥ पूर्ववचनं परप्रयोगनिवृत्त्यर्थमिति। ननु च परप्रयोगविपर्ययो लोके न दृष्ट एव, तत् कथं परप्रयोगनिवृत्त्यर्थेन पूर्वग्रहणेनेत्यत आह—अनियमो हि स्यादिति। सम्भावनायां लिङ्। एवं मन्यते—यद्यपि परप्रयोगविपर्ययो न दृष्टः,

कष्टश्रितः । तृतीया---शंकुलाखण्डः । चतुर्थी---यूपदारु । पञ्चमी---वृकभयम् । षष्ठी---राजपुरुषः । सप्तमी---अक्षशौण्डः ॥

राजदन्तादिषु परम् ॥ ३१ ॥

पूर्वनिपाते प्राप्ते परप्रयोगार्थं वचनम् । राजदन्तादिषु परमुपसर्जनं प्रयोक्तव्यम् । न केवलमुपसर्जनस्य, अन्यस्यापि यथालक्षणं विहितस्य पूर्वनिपातस्यापवादः परनिपातो विधीयते । दन्तानां राजा राजदन्तः । वनस्याग्रे अग्रेवणम् । निपातनादलुक् ।

राजदन्तः । अग्रेवणम् । लिप्तवासितम् । नग्नमुषितम् । सिक्तसंमृष्टम् । मृष्टलुञ्चितम् । अवक्लिन्नपक्वम् । अर्पितोप्तम् । उप्तगाढम् ।

पूर्वकालस्य परनिपातः--- उलूखलमुसलम् । तण्डुलकिण्वम् ।

पदमञ्जरी

न दृष्टः परपुरुषापराधात्तु वाक्यवत्सम्भाव्येतेत्यर्थः । इह राज्ञः पुरुषस्य पुत्रो राजापुरुषपुत्र इति षष्ठीसमासशास्त्रे द्वयोरपि प्रथमानिर्दिष्टत्वेऽप्युपसर्जनसंज्ञाऽन्वर्थत्वादप्रधानस्यैव भवति, पुरुषश्चात्र राजापेक्षया प्रधानमिति पूर्वनिपातनियमः ॥

*राजदन्तादिषु परम्* ॥ न *केवलमित्यादि* । अत्र विहितपूर्वनिपातस्येति पाठे विहितः पूर्वनिपातो यस्य तस्येत्यर्थः । प्रायेण तु *विहितस्येति* पाठः । तत्रापवाद इति शेषः । अन्यस्यापि घ्यादेर्यः पूर्वनिपातो यथालक्षणं विहितस्तस्याप्यपवाद इत्यर्थः । *अग्रेवणमिति* । 'वनं पुरगा' इत्यादिना णत्वम् । तदेव तर्हि णत्वविधानं परनिपातस्य ज्ञापकं भविष्यति ? तन्न, 'उपसर्जनं पूर्वम्' इति नियमो न प्रवर्त्तत इत्येतावतोऽप्यर्थस्य ज्ञापकत्वेन तदुपपन्नम्, तस्मात्कथं नियमेन परनिपातः स्यात् ! इह च निपातनादलुगिव णत्वमपि न भविष्यतीति तत्राग्रेग्रहणं शक्यमकर्तुम् । *पूर्वकालस्येति* । 'पूर्वकालैक' इति प्रथमानिर्देशा-

न्यासः

तथाप्यसति नियामके वाक्ये पुरुषापराधाद् विपरीतप्रयोगोऽपि सम्भाव्येत । येषाञ्च वाक्यमेव समासीभवतीति दर्शनम्, तेषां वाक्यस्यानियतक्रमत्वात् तद्विकारोऽपि समासोऽनियतक्रमः स्यादिति सूत्रारम्भः ॥

**राजदन्तादिषु परम्** ॥ पूर्वस्य परनिपात इति लिप्तवासिताद्युप्तगाढपर्य्यन्तेषु । उदूखलमुसलादयो ये द्वन्द्वाः, तत्र कचिदल्पाच्तरत्वात् पूर्वनिपातः प्राप्नोति, क्वचिद्

दृषदुपलम्। आरग्वायनबन्धकी। चित्ररथबाह्लीकम्। आवन्त्यश्मकम्। शूद्रार्यम्। स्नातकराजानौ। विष्वक्सेनार्जुनौ। अक्षिभ्रुवम्। दारगवम्।

शब्दार्थौ। धर्मार्थौ। कामार्थौ। अनियमश्चात्रेष्यते। अर्थशब्दौ। अर्थधर्मौ। अर्थकामौ। तत्कथम्? वक्तव्यमिदम्—धर्मादिषूभयमिति। वैकारिकतम्। गजवाजम्। गोपालधानीपूलासम्। पूलासककरण्डम्। स्थूलपूलासम्। उशीरबीजम्। सिञ्जास्थम्। चित्रास्वाती। भार्यापती। जायापती। जम्पती। दम्पती। जायाशब्दस्य जम्भावो दम्भावश्च निपात्यते। पुत्रपती। पुत्रपशू। केशश्मश्रू। श्मश्रुकेशौ। शिरोबीजम्। सर्पिर्मधुनी। मधुसर्पिषी। आद्यन्तौ। अन्तादी। गुणवृद्धी। वृद्धिगुणौ॥

## द्वन्द्वे घि॥ ३२॥

'पूर्वम्' इति वर्त्तते। द्वन्द्वे समासे घ्यन्तं पूर्वं प्रयोक्तव्यम्।

### पदमञ्जरी

द्रुपसर्जनस्येत्यर्थः। उलूखलमुसलादिद्वन्द्वेषु क्वचिदल्पाक्षरत्वात्क्वचिद् घ्यन्तत्वात्क्वचिदजाद्यदन्तत्वात्पूर्वनिपातप्रसङ्गः, क्वचिदनियमः। *दृषदुपलमिति*। प्रमाद पाठः; अल्पाच्तरत्वात्। *अक्षिभ्रुवं दारगवमिति*। अचतुरादिसूत्रेऽच्समासान्तो निपातितः, तेन परनिपातस्यापि सिद्धत्वादिह पाठः शक्योऽकर्तुम्॥

द्वन्द्वे *घि*॥ द्वन्द्वेऽनेकमिति प्रथमानिर्देशात्सर्वेषामेवोपसर्जनत्वादनियमे प्राप्ते

### न्यासः

घ्यन्तत्वात् पूर्वनिपातः, क्वचिदजाद्यन्तत्वात्; क्वचित् तुल्यत्वादनियमः। दृषदुपलमिति प्रमादाच्चायं पाठो लक्ष्यते। अल्पाच्तरत्वाद् दृषच्छब्दस्य पूर्वनिपातः सिद्धः। अक्षिभ्रुवम्, दारगवमिति। अचतुरादिसूत्रेणाच् समासान्तः। स्थूलपूलासमिति। प्रमादपाठोऽयं लक्ष्यते; पूर्वोक्तादेव कारणात्॥

द्वन्द्वे घि॥ 'उपसर्जनम्' इत्यन्वर्थसंज्ञाविज्ञानादप्रधानस्योपसर्जनसंज्ञा विहिता। द्वन्द्वे च सर्वेषां पदानां प्राधान्यम्। न कस्यचिदप्राधान्यमित्युपसर्जनसंज्ञाया अभावादनियमे प्राप्ते वचनमिदम्। अथ यत्र बहूनां पूर्वनिपातप्रसङ्गस्तत्र किमेकस्यानियमो

पट्वुगुप्तौ। मृदुगुप्तौ। अनेकप्राप्तावेकस्य नियमः, शेषे त्वनियमः। पटुमृदुशुक्लाः। पटुशुक्लमृदवः।

द्वन्द्व इति किम्? विस्पष्टपटुः॥

अजाद्यदन्तम्॥ ३३॥

'द्वन्द्वे' इति वर्त्तते। अजाद्यदन्तं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम। उष्ट्रखरम्। उष्ट्रशशकम्।

* बहुष्वनियमः *। अश्वरथेन्द्राः। इन्द्ररथाश्वाः।

*द्वन्द्वे घ्यन्तादजाद्यदन्तं विप्रतिषेधेन*। इन्द्राग्नी। इन्द्रवायू।

तपरकरणं किम्? अश्वावृषौ, वृषाश्वे इति वा॥

पदमञ्जरी

वचनम्। *अनेकप्राप्ताविति*। आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्त्तते, न प्रतिव्यक्त्यावृत्त्या। तत्रैकस्यैव पूर्वनिपातेन जातौ लक्षणं प्रवृत्तमेवेति न पुनः प्रवर्तते। नन्वाकृतिपक्षेऽपि पटुगुप्तौ मृदुगुप्तावित्यादिषु बहुषु व्यक्तिषु यथा युगपत्प्रवर्तते, तथात्रापि प्रवर्ततताम्? एवं मन्यते—एकस्य युगपदवध्यवधिमद्भावो विरोधान्न सम्भवति। न चान्तमपेक्ष्योभयोः पूर्वत्वमन्यतरेण व्यवधानादिति, अत्र च यदा पटुमृद्वोर्द्वन्द्वं कृत्वा पश्चाच्छुक्लशब्दस्य द्वन्द्वः क्रियते तदाल्पाच्तरत्वात्तस्य पूर्वनिपाते शुक्लमृदुपटवः, शुक्लपटुमृदव इति च भवति। *विस्पष्टपटुरिति*। विस्पष्टशब्दः प्रवृत्तिनिमित्तस्य पाटवस्य विशेषणमिति विस्पष्टं पटुरिति विगृह्य 'सुप्सुपा' इति समासः॥

*अजाद्यदन्तम्*॥ अजादीति पृथक् पदम्, विशेषणसमासो वा। *अश्वेन्द्ररथा इति*। रथशब्दस्य पश्चात्समासे रथाश्वेन्द्रा इत्यपि भवति। *द्वन्द्वे घ्यन्तादजाद्यदन्तं विप्रतिषेधेनेति*। 'द्वन्द्वे घि' इत्यस्यावकाशः—पटुगुप्तौ; 'अजाद्यदन्तम्'

न्यासः

भविष्यति, उत सर्वेषामित्याह—*अनेकप्राप्तावेकस्येत्यादि*। एष चार्थो जातिपदार्थस्याश्रयणाल्लभ्यते व्यक्तौ तु पदार्थे प्रतिव्यक्ति शास्त्रप्रवृत्त्या भवितव्यम्, ततः सर्वेषां नियमः स्यात्। आकृतौ तु पदार्थे लक्ष्य एकं लक्षणं सकृदेव प्रवर्त्तते। तेन चैकस्य पूर्वनिपाते जातिः कृतार्थेति शेषाणामनियमो भवति। एवमुत्तरत्राप्येकस्य नियमः, शेषाणान्त्वनियम इति वेदितव्यम्। *विस्पष्टपटुरिति*। विस्पष्टः पटुः, मयूरव्यंसकादित्वात् समासः॥

*अजाद्यदन्तम्*॥ *द्वन्द्वे घ्यन्तादजाद्यदन्तं विप्रतिषेधेनेति*। 'द्वन्द्वे घि' इति तस्माद-

